अथ भयोगरत्नस्यानुक्रमणिकाप्रारंभः

श्रीगणेशायनमः ॥ ॥ अथप्रयोगरत्नस्यानुक्रमणिकालिख्यते ॥ ॥

समाप्तेयमनुक्रमणिका

श्रीकृष्णार्पणमस्तु

मुं॰ काशिना॰वा॰खंडेकरया॰छा॰छा॰९२मा॰

प्र॰ र॰
१

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीरामंसपरीवारंगणेशंचसरस्वतीं ॥ आश्वलायनतच्छिष्यान्प्रणम्यपितरंगुरुं ॥१॥ भट्टरामेश्वर
सुतोभट्टनारायणःसुधीः ॥ प्रयोगरत्नंकुरुतेकाश्यांशिष्टेष्टतुष्टये ॥२॥ ग्रंथेस्मिन्गुणगणवत्त्वमुच्यतेचेत्स्वयंग्रंथंगुणगणवंतमाहकोन ॥ त-
त्सन्तःशिरसिकृतांजलिस्तुयाचेशोध्यंतत्सदसदिहोच्यतेमयायत् ॥३॥ ॥अथसंस्काराः॥ ॥तेचाष्टचत्वारिंशत् ॥तथाचगौतमः॥गर्भाधा
नपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानिचत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगःपंचानांयज्ञानामनुष्ठानमष्टकापा
र्वणःश्राद्धंश्रावण्याग्रहायणीचैत्र्याश्वयुजीतिसप्तपाकसंस्थाःअग्न्याधेयमग्निहोत्रंदर्शपौर्णमासौचातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधःसौ
त्रामणीतिसप्तहविर्यज्ञसंस्थाअग्निष्टोमोत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोतिरात्रोप्तोर्यामइतिसप्तसोमयज्ञसंस्थाइत्येतेचत्वारिंशत्संस्काराः
अष्टावात्मगुणाश्च ॥दयासर्वभूतेषुक्षांतिरनसूयाशौचमनालस्यंमांगल्यमकार्पण्यमस्पृहेति यस्यैतेचत्वारिंशत्संस्काराःअष्टावात्मगुणाश्चसब्र
ह्मणःसायुज्यमाप्नोतीति ॥पार्वणःपार्वणस्थालीपाकः॥श्राद्धममावास्यादि॥श्रावणीतत्रकर्तव्यंश्रवणाकर्म॥आग्रहायणी॥तत्रकर्तव्यंप्रत्यवरो
हणं॥चैत्री॥तत्रकर्तव्यःशूलगवः॥आश्वयुजी॥तत्रकर्तव्यमाश्वयुजीकर्मेतिहरदत्तोव्याचख्यौ॥अंगिरास्तु॥पंचविंशतिसंस्कारैःसंस्कृताये
द्विजातयः॥तेपवित्राश्चयोग्याःस्युःश्राद्धादिषुसुयंत्रिताः॥आदिशब्दाद्याजनादौ॥गर्भाधानंपुंसवनंसीमंतोबलिरेवच॥बलिर्विष्णुबलिः॥जा
तकृत्यंनामकर्मनिष्क्रमोन्नाशनंपरं॥चौलकर्मोपनयनंतद्व्रतानांचतुष्टयं॥तच्छब्देनप्रसिद्धत्वाद्वेदग्रहणेनव्रतानांवेदव्रतानामित्यर्थः॥स्नानोद्वा

प॰ भा॰
१

हौ चाग्रयणमष्टका च यथातथम् ॥ श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणं ॥ उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥ संस्कारा नियतास्त्वेते
ब्राह्मणस्य विशेषत इति ॥ श्रावण्यां श्रवणाकर्म्मेत्यादि पूर्ववद्व्याख्येयं ॥ नियता नित्याः ॥ एतेषां पंचविंशतीनां नैमित्तिकवार्षिकमासिकनि-
त्यभेदेन चातुर्विध्यमाहाश्वलायनः ॥ नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ॥ सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥ मासिकं पा
र्वणं प्रोक्तमशक्तानां तु वार्षिकं ॥ महायज्ञास्तु नित्याः स्युः संध्यावच्चाग्निहोत्रवदिति ॥ अत्र गर्भाधानाद्या उपनयनांता एव सर्वेषां नियताः ॥ नतु-
स्नानाद्याः तेन ब्रह्मचर्यादेव प्रव्रजेदित्यादिर्न विरुध्यते ॥ एते च द्विजानामेव समंत्रकाः ॥ तदाह याज्ञवल्क्यः ॥ ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्या-
स्त्रयो द्विजाः ॥ निषेकाद्याः श्मशानांतास्तेषां वै मंत्रतः क्रिया इति ॥ वै एवार्थः ॥ अत्र तेषामेव मंत्रतः क्रिया इति वदन् शूद्रस्यामंत्रकाः क्रिया इति सू
चयति ॥ अत एव संस्कारानधिकृत्य यमः ॥ शूद्रोप्येवंविधः कार्यो विना मंत्रेण संस्कृत इति ॥ इति संस्काराः ॥ ॥ अथ स्वस्तिवाचनं ॥ ॥ तद्यत्र कर्तव्यं
तदुच्यते ॥ ॥ व्यासः ॥ ॥ संपूज्य गंधमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ॥ धर्मकर्मणि मांगल्ये संग्रामेऽद्भुतदर्शने ॥ गृह्यपरिशिष्टे ॥ अथ स्वस्तिवाचनं
मृद्धिपूर्तेषु ॥ ऋद्धिर्विवाहांता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्तं तत्कर्मणश्चाद्यंतयोः कुर्यादिति ॥ ॥ आश्वलायनस्मृतिः ॥ ॥ वैदिके तांत्रिके चाद्यंत
तः पुण्याहमिष्यते ॥ ॥ शौनकः ॥ ॥ पुण्याहवाचनविधिं वक्ष्यामाथ यथाविधि ॥ प्रयोक्तुः कर्मणामाद्यावंते चोदयसिद्धय इति ॥ तच्च प्रयोगांतर्गतमिति
केचित् ॥ बहवस्तु प्रयोगबहिर्भूतमिति ॥ आद्यपक्षे कर्मप्रयोगसंकल्पं कृत्वा कार्यं ॥ द्वितीये तु तन्न कृत्वा कर्मसंकल्पः ॥ ॥ अथ प्रयोगः प्रयोगपारिजाते

नुसारेणोच्यते ॥ यजमानःकृताभ्यंगादिःस्वलंकृतोदर्भपाणिःशुचिर्भूत्वामंगलसंभारंसंभृत्यस्वलंकृतेगृहेगोमयोपलिप्तभूमौसोत्तरच्छदेभद्रासनेउद
ङ्मुखउपविश्यस्वदक्षिणपार्श्वेसंस्कार्यंसुदृङ्मुखमुपवेश्यरंगवल्लिकायुक्तेभूतलेप्रस्थपरिमितस्याशक्तौतन्न्यूनस्यवाधान्यस्योपरिदक्षिणोत्तरयोः
सुवर्णरजतताम्रमृन्मयान्यतमकलशद्वयमव्रणंमनोहरंअलंकृतंशुद्धपुण्यजलपूरितंसपल्लवंसफलंनिधायसूत्रवेष्टितोत्तरकलशेपंचरत्नानिनिक्षिप्य
तदुपरिसिततंडुलपूरितंसफलंपात्रंनिधायतत्पश्चिमदेशेप्रशस्तान्प्रतिवचनसमर्थांस्तद्दिवसेश्राद्धादिष्वभुक्तवतोनिषिद्धप्रतिग्रहानिवृत्तान्शुचीन्सो·
त्तरीयान्दर्भपाणीन्युग्मान्ब्राह्मणान्प्राङ्मुखानासनेउपवेश्यगंधपुष्पादिभिरभ्यर्च्ययथाचारं ॥ सुमुखश्चेत्यादिभिर्गणपतिंस्मृत्वाषोडशोपचारैर
भ्यर्च्यउत्तरकलशेदेवताआवाहयेत् ॥ तद्यथा ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसाग
राःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ पुष्टिःशांतिश्चगायत्रीसावित्रीचस
रस्वती ॥ आयांतुयजमानस्यदुरितक्षयकारिकाः ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ एवमेताःस
मावाह्यकलशेदेवतास्ततः ॥ एतान्मंत्रस्थितान्देवान्संपूज्यप्रार्थयेत्क्रमात् ॥ ततः ॥ सर्वेषुकालेषुसमस्तदेशेष्वशेषकार्येषुतथेश्वरेश्वरः ॥ सर्वैःस्व
रूपैःस्तुतिमाननादिर्ममास्तुमांगल्यविवृद्धयेहरिः ॥ यत्रयोगेश्वरःकृष्णः० ॥ अनन्याश्चिंतयंतोमां० ॥ स्मृतेसकलकल्याण० ॥ सर्वेष्वारब्धकार्येषु० ॥
सर्वमंगलमांगल्ये० ॥ तदेवलग्नमितियथाचारंपठित्वा ॥ लक्ष्मीनारायणंनत्वा ॐ दुर्गायैनमइतिप्रणवादिचतुर्थ्यंतनमोंतनामभिःदुर्गाक्षेत्रपालं·

वास्तुपुरुषंमातॄःपितॄनाचार्यानिष्टदेवताःकुलदेवताःग्रामदेवताःसर्वादेवताःसर्वान्ब्राह्मणानितिसर्वान्प्रत्येकंनत्वाप्राणानायम्यदेशकालौसंकी
र्त्यामुककर्मकर्तुंमोदाशक्तिद्धिदृष्ट्यभ्युदयसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंब्राह्मणैःसहस्वस्तिपुण्याहवाचनंकरिष्येइतिसंकल्पयेत्॥ततःसर्वेब्रा
ह्मणाःप्राङ्मुखास्तिष्ठेयुः॥तद्दक्षिणतःकर्तोत्तरकलशंबिभ्रदुदङ्मुखस्तिष्ठेत्॥कर्तुर्दक्षिणपार्श्वेसंस्कार्यउदङ्मुखस्तिष्ठेत्॥अथकर्ताआ
पइत्युक्त्वा॥शिवाआपःसंत्वितिविप्रान्वाचयित्वागंधाइत्युक्त्वासुगंधाःपांत्वितिवाचयित्वासुमनसइत्युक्त्वासौमनस्यमस्त्वितिवाचयित्वाअक्षत
मित्युक्त्वाअक्षतंचारिष्टंचास्त्वितिवाचयित्वादक्षिणाइत्युक्त्वास्वस्तिदक्षिणाःपांतुबह्वदेयंचास्त्वितिवाचयित्वातंकलशंपूर्ववन्निधायदक्षिणंजा
नुभूमौनिपात्योदङ्मुखःश्रद्धयेत्यादिसूक्तंजपित्वापुनस्तंकलशमादायोत्थायोदङ्मुखोमनःसमाधीयतामित्युक्त्वासमाहितमनसःस्मइति
तैरुक्तेप्रसीदंतुभवंतइत्युक्त्वाप्रसन्नाःस्मइतितैरुक्तेसर्वैःसहशांतिरस्तु॥पुष्टिरस्तु॥तुष्टिरस्तु॥वृद्धिरस्तु॥अविघ्नमस्तु॥आयुष्यमस्तु॥आ
रोग्यमस्तु॥स्वस्तिशिवंकर्मास्तु॥कर्मसमृद्धिरस्तु॥धर्मसमृद्धिरस्तु॥पुत्रसमृद्धिरस्तु॥वेदसमृद्धिरस्तु॥शास्त्रसमृद्धिरस्तु॥धनधान्यस
मृद्धिरस्तु॥इष्टसंपदस्तु॥इतिपंचदशवाक्यान्युक्त्वास्वयंकर्मदेवतात्मकोभगवान्प्रजापतिःप्रीयतामित्युक्त्वाप्रीयतांभगवान्कर्मदेवतात्मकः
प्रजापतिरितितैर्वाचयित्वापुण्याहंवाचयिष्येहमित्युक्त्वावाच्यतामितितैरुक्ते॥उद्गातेवशकुनेसामगायसीतिऋचंसर्वैःसहपठित्वाओंपुण्याहं
भवंतोब्रुवंत्वितिस्वयंमंद्रस्वरेणोक्त्वाब्राह्मणैरोंपुण्याहमितितथोक्तेपुनरेवंमध्यमस्वरेणोक्त्वातथैवतैरुक्तेपुनरेवमुच्चस्वरेणोक्त्वातथैवतैरुक्ते॥

प्र॰र॰

पूर्वकं ३

स्वस्तिनइंद्रोवृद्धश्रवाइत्यृचंसर्वैःसहपठित्वास्वस्तिभवंतोब्रुवंत्वितिपूर्ववदुक्त्वास्वस्तीतितथैवोक्तेःअमुकस्यस्वस्त्यमुककर्मणेभवंतोब्रुवंत्वितिकरिष्य-
माणकर्मनामपूर्ववदुक्त्वाअमुककर्मणेस्वस्तीतितैःपूर्ववदुक्ते॥ऋध्यामस्तोममित्यृचंसर्वैःसहपठित्वाऋद्धिंभवंतोब्रुवंत्वितिपूर्ववदुक्ते॥ॐ-
ऋध्यतामितितैरुक्तेतथैवअस्कृत्तेसामात्यःप्राङ्मुखउपविशेत्॥इदंशौनकमते॥गृह्यपरिशिष्टेतुस्वस्त्यमुककर्मणइत्युक्तेअत्रअस्कृत्तेदेनस्तः॥ततोवि
प्राःप्राङ्मुखाउपविश्यतदृद्धिकलशोदकंविप्राःलेताम्यादिपात्रेनिनीययजमानंसामात्यंमंत्रैरभिषिंचेयुः॥तेचमंत्राः॥तत्सवितुर्विश्वामित्रः
सवितागायत्री॥आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री॥पंचमीवर्धमाना॥सप्तमीप्रतिष्ठा॥अंत्येद्वेअनुष्टुभौ॥आनोभद्रा-
इतिदशर्चस्यराहूगणोगोतमोविश्वेदेवास्त्रिष्टुप्पंचाद्याःसप्तमीचजगत्यःषष्ठीविराट्स्थानाशिष्टास्त्रिष्टुभः॥अपनःशोशुचदघमित्यष्टर्चस्य
कुत्सोग्निर्गायत्री॥एतोन्विंद्रमितितृचस्यांगिरसस्तिरश्चीरिंद्रोनुष्टुप्॥स्वादिष्ठयेतिदशर्चस्यमधुच्छंदाःपवमानसोमोगायत्री॥नरत्समद्रीत्यृक्
चतुष्टयस्यआवत्सारःपवमानसोमोगायत्री॥शुचीवोहव्येतिमंत्रस्यवसिष्ठोमरुतस्त्रिष्टुप्॥यदंतियच्चेतिवर्गद्वयस्य॥आद्यायावसिष्ठऋषिः
शिष्टानामेकादशानांपवित्रवासिष्ठाहृषी॥पवमानसोमोदेवतागायत्रीछंदः॥यत्तेपवित्रमर्चिषीतिद्वेअग्निदेवते॥उभाभ्यांदेवसवितरितिसावि
तृदेवत्या॥त्रिभिष्ट्वमितिअग्निसवितृदेवत्या॥पुनंतुमामितिवैश्वदेवी॥आप्यायस्वेतिपुरउष्णिक्॥पुनंतुमामिति॥यःपावमानीरिति॥पाव-
मानीर्योअध्येतीतिचानुष्टुभः॥अग्निःशुचिव्रततमइतिविरूपोग्निर्गायत्री॥समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप्॥त्वायंतामितित्

पु॰मा॰

३

चस्यसप्तऋषयोविश्वेदेवाअनुष्टुप् ॥ इमाआपःशिवतमाइत्यनेनतृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरित्येताभिर्व्याहृतीभिः ॥ कुशाग्रैःसप
ल्लवैरभिषिंचेयुः ॥ ततःसुवासिनीभिर्नीराजनंकार्यंयथाचारं ॥ ततोब्राह्मणानांवैदिकमन्त्राशिषोग्राह्याः ॥ कर्मांतेपिपुनरेवंकार्यं ॥ इति
जयंतादिसंमतःप्रयोगपारिजातप्रोक्तःपुण्याहवाचनविधिः ॥ ॥ अथहेमाद्रौदानकांडेबह्वृचपरिशिष्टत्वेनोक्तःसकलसाधारण-
शिष्टाचारप्राप्तश्चपुण्याहवाचनप्रयोगः ॥ कृतमंगलस्नानःस्वलंकृतःकृताचमनःप्राङ्मुखोयजमानःवस्त्राच्छादितेपीठेउपविश्यपत्नीं
स्वदक्षिणतःप्राङ्मुखींसुपवेश्यसंस्कार्यंचतयोर्वोपवेश्य ॐ सुमुखश्चैकदंतश्चेत्यादिशुक्लांबरधरंदेवं० अभीप्सितार्थ०सर्वमंगलमांगल्ये
सर्वदासर्व०सर्वेषुकालेषु०तदेवलग्नं०यत्रयोगेश्वरः०सर्वेष्वारब्धकार्येष्वितिश्लोकानुपठित्वा ॥ ॐ लक्ष्मीनारायणाभ्यांनमः ॥ उमामहेश्वरा
भ्यांन० ॥ शचीपुरंदराभ्यां० ॥ मातापितृभ्यां० ॥ इष्टदेवताभ्योन० ॥ कुलदेवताभ्यो० ॥ सर्वेभ्योदेवेभ्यो० ॥ सर्वेभ्योब्राह्मणेभ्यो० ॥ आचमनप्रा-
णायामौदेशकालौसंकीर्त्यामुकफलसिध्यर्थंश्वोऽद्यवामुककर्मकरि० ॥ तदंगतयादौपुण्याहवाचनादिकरिष्येइतिसंकल्पयेत् ॥ यदातुप्रयो-
गाद्बहिर्भूतंपुण्याहवाचनाद्यंगंतदाऽमुकफलसिध्यर्थममुककर्मकर्तुमंगभूतमादौपुण्याहवाचनादिकरिष्यइतिप्रत्येकंसंकल्पः ॥ प्रधानसं
कल्पस्तुसर्वंकृत्वान्तेहिनएवश्वोवाकार्यः ॥ ततोयजमानःषोडशोपचारैःगणपतिमभ्यर्च्यप्रार्थयेच्च ॥ ततःकर्तास्वपुरतःमहीद्यौःपृथ्वीचनइ
तिमंत्राहस्त्यादक्षिणोत्तरतोभूमिंस्पृष्ट्वा ओषधयःसमितितत्रैवतंडुलपुंजौकृत्वा आकलशेष्वितिपुंजोपरिद्वौसलक्षणौधातुमयौमृन्मयौवाक

लशौनिधाय इमंमेगंगेइतितीर्थजलेनप्रत्येकंपूरयित्वागंधद्वारामितिगंधंकलशयोःप्रक्षिप्यचंदनादिनातावनुलिप्यपुष्पमालाभूषितौकृत्वापूर्णादर्वी
तिसतंडुलाभ्यांसफलाभ्यांपात्राभ्यांकलशयोराननेपिदध्यात्॥सर्वत्रमनिकलशंमंत्राद्दत्तिरुत्तरसंस्थतान्च॥ततस्तत्वायामिशुनःशेपोवरुणस्त्रि
ष्टुप्॥कलशेवरुणावाहनेवि॰ ॐ तत्वायामिब्रह्मणेतिउत्तरकलशेवरुणमावाहयेत्॥चंदनादिनापूजयेच्च॥ततउत्तरकलशेदेवताआवाहयेदे
वं॥कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः॥मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः॥कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा॥ऋग्वे
दोथयजुर्वेदःसामवेदोह्यथर्वणः॥अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः॥अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा॥आयांतुममशांत्य
र्थंदुरितक्षयकारिकाः॥सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः॥आयांतुममशांत्यर्थंदुरित॰॥ततस्तत्कलशेअक्षतान्प्रक्षिपेत्॥मातृदेवोभ
व॥पितृदेवोभव॥आचार्यदेवोभव॥अतिथिदेवोभवइति॥ततःअवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणे
नपाणिनासुवर्णपूर्णकलशंधारयित्वा॥आशिषःप्रार्थयेत्॥प्रार्थनामाह॥एताःसत्याआशिषःसंतु॥दीर्घानागानद्योगिरयस्त्रीणिविष्णु
पदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु॥शिवाआपःसंतु॥सौमनस्यमस्तु॥अक्षतंचारिष्टंचास्तु॥गंधाःपांतु॥सुमंगल्यंचास्तु॥
अक्षताःपांतु॥आयुष्यमस्तु॥पुष्पाणिपांतु॥सौश्रियमस्तु॥तांबूलानिपांतु॥ऐश्वर्यमस्तु॥दक्षिणाःपांतु॥बहुदेयंचास्तु॥दीर्घमायुःश्रे
यःशांतिःपुष्टिस्तुष्टिश्चास्तु॥श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु॥अत्रसर्वत्रब्राह्मणैरस्त्वितिप्रत्युत्तरंदेयं॥यंकृत्वासर्ववेद

यज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्तंतेनमहमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनंबहुऋषिमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्या
हंवाचयिष्ये ॥विप्राः॥वाच्यतामितिवदेयुः एवमुत्तरत्रापियथायोग्यंप्रस्कन्तरंदूय ॥ततोयजमानः॥भद्रंकर्णेभिःऋ०कू १ द्रविणोदाद्रवि०१स
वितापश्चा०१ नवोनवोभव०१उच्चादिवि०१ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ऋ०१य-
स्मैत्वंसुकृतेजा०१ संत्वासिंचामियजुषाप्रजामायुर्धनंच॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानांब्राह्मणानांमनःसमाधीयतां॥
विप्राः॥समाहितमनसःस्मः॥यजमानः॥प्रसीदंतुभवंतः॥विप्राः॥प्रसन्नाःस्मः॥यजमानः॥ शांतिरस्तु॥पुष्टिरस्तु॥तुष्टिरस्तु॥वृद्धिर-
स्तु॥ अविघ्नमस्तु॥ आयुष्यमस्तु॥ आरोग्यमस्तु ॥शिवंकर्मास्तु ॥ कर्मसमृद्धिरस्तु॥ धर्मसमृद्धिरस्तु॥ वेदसमृद्धिरस्तु ॥शास्त्रसमृद्धिर-
स्तु॥पुत्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धिरस्तु ॥ इष्टसंपदस्तु॥ अरिष्टनिरसनमस्तु॥ यत्पापंतत्प्रतिहतमस्तु॥ यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्य
विघ्नमस्तु॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु॥ उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंतां॥ दृष्टाःकामाःसंपद्यंतां॥ तिथिकरणमुहूर्तन-
क्षत्रसंपदस्तु ॥तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंतां॥तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदैवतेप्रीयेतां॥ अग्निपुरोगाविश्वे
देवाःप्रीयंतां॥ इंद्रपुरोगामरुद्गणाःप्रीयंतां॥ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां॥माहेश्वरीपुरोगाउमामात
रःप्रीयंतां॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां॥ अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां॥ ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां॥ब्र

२ दुर्गापांचाल्यौप्रीयेतां।३

स्त्वब्राह्मणाश्चप्रीयंतां ॥ श्रीसरस्वत्यौप्रीयेतां ॥ श्रद्धामेधेप्रीयेतां ॥ भगवतीकात्यायनीप्रीयतां ॥ भगवतीमाहेश्वरीप्रीयतां ॥ भगवतीपुष्टिकरी-
प्रीयतां ॥ भगवतीतुष्टिकरीप्रीयतां ॥ भगवतीऋद्धिकरीप्रीयतां ॥ भगवतीवृद्धिकरीप्रीयतां ॥ भगवंतौविघ्नविनायकौप्रीयेतां ॥ भगवान्स्वामी
महासेनःसपत्नीकःससुतःसपार्षद्ःसर्वस्थानगतःप्रीयतां ॥ ह्मरहरहिरण्यगर्भाःप्रीयंतां ॥ सर्वाग्रामदेवताःप्रीयंतां ॥ सर्वाःकुलदेवताःप्रीयंतां
हताब्रह्मद्विषः ॥ हताःपरिपंथिनः ॥ हताअस्यकर्मणोविघ्नकर्तारः ॥ शत्रवःपराभवंयांतु ॥ शाम्यंतुघोराणिशाम्यंतुपापानि ॥ शाम्यंत्वीतयः ॥ शु-
भानिवर्धंतां ॥ शिवाआपःसंतु ॥ शिवाऋतवःसंतु ॥ शिवाअग्नयःसंतु ॥ शिवाआहुतयःसंतु ॥ शिवाओषधयःसंतु ॥ शिवावनस्पतयःसंतु
शिवाअतिथयःसंतु ॥ अहोरात्रेशिवेस्यातां ॥ निकामेनिकामेनःपर्जन्योवर्षतु ॥ फलवत्योनओषधयःपच्यंतां ॥ योगक्षेमोनःकल्पतां ॥ शुक्रां-
गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां ॥ भगवान्नारायणःप्रीयतां ॥ भगवान्पर्जन्यःप्रीयतां ॥ भ-
गवान्स्वामीमहासेनःप्रीयतां ॥ पुण्याहकालान्वाचयिष्ये ॥ वाच्यतां ॥ ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशि-
शुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभा-
वयतिपुण्यांलक्ष्मींसंस्कुरुते ॥ यत्पुण्यंनक्षत्रं ॥ तद्बट्कुर्वीतोपव्युषं ॥ यदावैसूर्यउदेति ॥ अथनक्षत्रंनैति ॥ यावतितत्रसूर्योगच्छेत् ॥ यत्रज-
घन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ तानिवाएतानि यमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्का-

रीस्यात् ॥ पुण्याहमेवकुरुते ॥ मह्यंसकुटुंबिनेमहाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणायामुककर्मणःपुण्याहंभवंतोब्रुवंत्वितित्रिर्वदे-
त् ॥ ॐ पुण्याहमितित्रिर्वदेयुर्विप्राः ॥ ॐ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदि-
त्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययेवेनःस्वस्त्याभूयंनिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेनःप्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ स्वस्ति
नइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवा वसवःसोम्यासः ॥ चतस्रो
देवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपुरस्तात् ॥ संवत्सरीणममृतंस्वस्ति ॥ मह्यमित्यादिकर्मणइत्यंतंपूर्ववत् ॥ स्वस्तिभवंतोब्रुवंत्विति
त्रिः ॥ ॐ आयुष्मतेस्वस्तीतिप्रतिवचनंत्रिः ॥ ॐ ऋध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूता
ंशोअश्विनोःकाममप्राः ॥ सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोस्तरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहंपरि-
भूयसर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः
शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिछंदांसि ॥ त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋध्यामेवतद्वीर्यएषुलोके-
षुप्रतितिष्ठति ॥ मह्यमित्यादिअस्यकर्मणःऋद्धिंभवंतोब्रुवंतुइतित्रिः ॥ ॐ ऋध्यतामितिप्रतिवचनंत्रिः ॥ ॐ श्रियेजातःश्रियआनिरि-
यायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावष-

द्वतंयंसंतत्येसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य
श्रियंदधात्वहृणीयमानं ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ एतेनमंत्रेण-
नीराजनंकारयित्वा ॥ मध्यभिव्यादिपूर्ववत् ॥ अमुककर्मसंपन्नौतेश्रीरस्त्वितित्रिर्वदेत् ॥ ॐ अस्तुश्रीरितित्रिर्विप्राः ॥ वर्षशतंसंपूर्णमस्तु ॥ शि
वंकर्मास्तु ॥ गोत्राभिवृद्धिरस्तु ॥ कर्मांगदेवताःप्रीयंतां ॥ ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायु
रपांश्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येषःश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभास
दइति ॥ ततउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्तेगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभिर्मंत्रैः ॥ ॐ वास्तोष्पतेप्रतिजानी-
ह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वे
भिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमउत
योगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ शिवमितित्रिः ॥ ततःकर्तुर्वामतःप
त्नीमुपवेश्यपात्रपातितजलेनपल्लवदूर्वाभिरुदङ्मुखाविप्राअभिषिंचेयुस्तिष्ठतः ॥ तत्रमंत्राः ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रि
ष्टुप् ॥ अभिषेकेविनि० ॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद ताआपोदेवीरिहमामवंतु

या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ॥ समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह० ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अ
वपश्यं जनानां ॥ मधुश्चुतः शुचयो याः पावकास्ता० ॥ यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदंति ॥ वैश्वानरो यास्वग्निः प्रविष्टस्ता० ॥ त्रा
यंतामिह देवास्त्रायतां मरुतां गणः ॥ त्रायंतां विश्वा भूतानि यथायमरपा असत् ॥ आपइद्वा उ भेषजीरापो अमीवचातनीः ॥ आपः सर्वस्य भेषजी
स्तास्ते कृण्वंतु भेषजं ॥ हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ॥ अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि ॥ इमा आपः शिवतमा इमाः
सर्वस्य भेषजीः ॥ इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत् प्रजापतिः सोमं राजानं वरुणं यमं मनुं ॥ ताभिरद्भिरभिषिंचा-
मि त्वामहं राज्ञां त्वमधिराजो भवेह ॥ महांतं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ देवस्य त्वा सवितुः प्रसवेश्वि
नोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलाय श्रियै यशसेन्नाद्याय ॥ ॐ भूर्भुवः स्वः ॥ इंद्रियं वा-
एतदस्मिल्लोके इत्यादि ब्राह्मणं ॥ सुरास्त्वामभिषिंचंत्वित्यादि पौराणिकान् श्लोकानपि पठंति अभिषेके तच्छंयोरिति मंत्रांते अमृताभिषे
कोस्त्विति पठेयुः ॥ तत आचारप्राप्तं वस्त्रादिदानं तत्परिधानं च ॥ एवं बह्वृचपरिशिष्टोक्तं शिष्टाचारप्राप्तं चैकीकृत्य पुण्याहवाचनमुक्तं ॥ इ
ति श्रीमहिहन्मुकुटमाणिक्य श्रीरामेश्वरभट्टसूनुनारायणभट्टविरचिते प्रयोगरत्ने सर्वकर्मोपयोगी पुण्याहवाचनप्रयोगः ॥ ॥ अथ लो
कानुसारेणानुकल्पपक्षमाश्रित्यांकुरार्पणप्रयोगः ॥ गर्भाधानादिनामकर्मांतकर्माणि हित्वा अन्नप्राशनादिविवाहांता० पत्यसंस्कारेषु अ

न्येषु च नवागारप्रवेशादिशुभकर्मसु सद्योंकुरार्पणं कुर्यात् ॥ तच्चैवं ॥ देशकालौ स्मृत्वा मुककर्मसाफल्यनिरंतरशुभप्राप्तिसिद्धिद्वारा श्रीपरमे
श्वरप्रीत्यर्थं अंकुरार्पणं करिष्ये इति संकल्प्य शुद्धभूमिं गोमयेनोपलिप्य रंगवल्यादिभिरलंकृत्य तत्र सितानक्षतान् प्रकीर्य किंचिद्दर्भैर्नववेणु
पात्रं सूत्रेणावेष्ट्य तद्देवपालिकात्वेन संस्थाप्य वल्मीकमृद्ह्रदपंकशुष्कगोमयचूर्णं च तत्र प्रक्षिप्य पालिकामूले श्वेततंदुलैः पूरयित्वा दूर्वा-
कुराश्वत्थशिरीषबिल्वपत्राणि सुपरि शुभमुहूर्ते तद्वेणुपात्रं निक्षिप्य तत्र सितरक्तहरितवर्णानि पुष्पाणि प्रकीर्य मध्यादि पंचस्थानेषु पंचदे-
वताः पूजयेत् ॥ तत्र ब्रह्मजज्ञानं कुंभो ब्रह्मा त्रिष्टुप् ॥ अनेन पालिकामध्ये ब्रह्माणमावाहयेत् ॥ यत इंद्रेति भर्गाथो भर्ग इंद्रो बृहती ॥ अनेन-
पूर्वभागे इंद्रमावाहयेत् ॥ नाके सुपर्णं भार्गवो वेनो यमस्त्रिष्टुप् ॥ अनेन दक्षिणे यममा० ॥ तत्त्वा यामि ब्रह्मणा अजीगर्तिः शुनःशेपो वरुण-
स्त्रिष्टुप् ॥ अनेन पश्चिमे वरुणमा० ॥ सोमो धेनुं राहूगणो गौतमः सोमस्त्रिष्टुप् ॥ अनेनोत्तरे सोममावा० ॥ ततः ब्रह्मणे नम आसनमित्यादि
क्रमेण षोडशोपचारैः पंचदेवताः सम्यगभ्यर्च्य पालिकापश्चिमतः प्राङ्मुख आस्तिष्ठन्नुपतिष्ठेत ॥ दिशांपतीन्नमस्यामि सर्वकामफलप्रदान्
कुर्वंतु सफलं कर्म कुर्वंतु सततं शुभमिति ॥ ततः सिततंडुलांस्तोयेन प्रक्षाल्य प्राच्यादिचतुर्दिक्षु बीजप्रतिनिधित्वेन समंत्रं वापयेत् ॥ तत्रय
तइंद्रेत्यादयश्चत्वारो मंत्राः प्रागुक्ताः ॥ ॥ इति नारायणभट्टकृते प्रयोगरत्ने सद्योंकुरार्पणप्रयोगः ॥ ॥ अथाभ्युदयिकश्राद्धविधिः ॥
तच्च गर्भाधानादिगर्भसंस्कारेषु जातकर्मादिषु अपत्यसंस्कारेषु अग्न्याधानादिषु श्रौतकर्मसु श्रवणाकर्मादिषु वापीकूपतडागारामाद्युद्यापना

दिषु देवप्रतिष्ठायां वानप्रस्थाश्रमसंन्यासस्वीकारे तुलापुरुषादिमहादानादौ नवगृहप्रवेशे महानाम्न्यादिवेदव्रतेषु राजाभिषेकशांतिकपौष्टिकेषु च स
र्वेषु उपाकर्मोत्सर्जनयोरप्येकेन वीनयोर्वा तयोरन्यत्राप्येवंविधे कार्यं ॥ इदमाभ्युदयिकश्राद्धं वक्ष्यमाणं च मातृपूजनमेकस्यानेकसंस्कारेषु ए
ककर्तृकेषु युगपदुपस्थितेषु सर्वादौ सकृदेव तंत्रेण कार्यं ॥ न तु प्रतिसंस्कारमावृत्त्या ॥ यथा दैवादकृतजातकर्मादिकस्योपनयनकाले जातकर्मा-
द्यनुष्ठाने देशांतरगतस्य मृतबुद्ध्या कृतौर्ध्वदेहिकस्यागतस्य पुनर्जातकर्मादिसंस्काराणां विहितानां युगपदनुष्ठाने कर्मनाशाजलस्पर्शादीनां प्रायश्चि
त्ततया पुनःसंस्काराणां युगपदनुष्ठाने वा ॥ तदुक्तं ब्रह्मपुराणे ॥ गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत् ॥ सकृदेव भवेच्छ्राद्धमादौ न पृथगा
दिष्विति ॥ तत्राभ्युदयिकश्राद्धे कर्तव्ये मानुष्यो देव्यश्च द्विविधा मातर आदौ पूज्याः ॥ तत्र मानुष्यो मातरो यथा मातृपितामहीप्रपितामह्यः ॥ मातामहीमा
तुः पितामही मातुः प्रपितामहीति षट् पितृष्वसा मातृष्वसा चेति ॥ ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ॥ ब्रह्माण्याद्याः ॥ ब्राह्मी माहेश्वरी-
चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेंद्राणी चामुंडाः सप्त मातरः ॥ दुर्गाक्षेत्राधिपतिगणाधिपतिं च पूजयेत् ॥ तथा कात्यायनः ॥ कुड्यल
ग्नाः वसोर्धाराः पंच धारा घृतेन तु ॥ कारयेत्सप्त वा धारा नातिनीचा न चोच्छ्रिताः ॥ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा
मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सहेति ॥ आत्मदेवतात्मकुलदेवता ॥ आयुष्याणि च शांत्यर्थं जपेदत्र समाहितः ॥ आयुष्याणि
आनोभद्राइत्यादीनि ॥ ततः वृद्धिश्राद्धं नवदैवत्यं ॥ पार्वणत्रयात्मकं ॥ तत्र क्रममाहाश्वलायनाचार्यः ॥ माता पितामही चैव संपूज्या प्रपितामही ॥ पित्रा

प्र॰र॰ ८

दयस्त्रयश्चैवमातुः पित्रादयस्त्रयः ॥ एतेनवार्चनीयाः स्युः पितरोऽभ्युदयेद्विजैरिति ॥ यत्तुवृद्धवसिष्ठः ॥ नांदीमुखेविवाहेचप्रपितामहपूर्वकं ॥ नामसं-
कीर्तयेद्विद्वानन्यत्रपितृपूर्वकमितिस्मृत्यर्थसारस्थं ॥ वृद्धमुख्यास्तुपितरोवृद्धिश्राद्धेषुभुंजतेइतितच्छाखान्तरविषयकं ॥ आश्वलायनानांतु ॥ अ-
नुलोम्येनमात्रादिक्रमेणैव ॥ आश्वलायनाचार्यवचनात् ॥ यत्तुब्रह्मपुराणे ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ त्रयोह्यश्रुमुखाह्येतेपितरः
संप्रकीर्तिताः ॥ तेभ्यः पूर्वेत्रयोयेतुतेतुनांदीमुखाः स्मृताइतितन्महालयप्रकरणपठितप्रोष्ठपदपौर्णमासीनिमित्तकश्राद्धविषयंतत्प्रकरणपा-
ठादित्येवंहेमाद्र्यादयऊचिरे ॥ इहचनांदीमुखसंज्ञकान्मात्रादीन्तुदर्शनात् ॥ विष्णुपुराणे ॥ कन्याविवाहादीननुक्रम्यनांदीमुखान्पितॄन्नांदीतर्प-
येत्प्रयतोगृहीत्युक्तेः ॥ ब्रह्मपुराणेच ॥ जन्माद्यनुक्रम्यपितॄन्नांदीमुखान्नामतर्पयेद्दधिपूर्वकमित्युक्तेः ॥ वृद्धपराशरेणतु ॥ देवानामपिनांदीमु-
खविशेषणमुक्तमत्रनांदीमुखेभ्योदेवेभ्यः प्रदक्षिणंकुशासनमिति ॥ वृद्धिश्राद्धेचकालः ॥ कर्मादौस्यात्पूर्वेद्युर्मातृपार्वणं ॥ कर्माहेपितृपार्वणं ॥ कर्मोत्तराहेमातामह-
पार्वणमिति ॥ अस्यासंभवेपूर्वेद्युरेवपूर्वाह्णेमातृपार्वणंमध्याह्नेपैतृकमपराह्णेमातामहानां ॥ अस्याप्यसंभवेआहवृद्धमनुः ॥ अलाभेश्रा-
द्धकालानांनांदीश्राद्धत्रयंबुधः ॥ पूर्वेद्युरेवकुर्वीतपूर्वाह्णेमातृपूर्वकमिति ॥ इदंचमहत्सुकर्मसु ॥ अल्पेषुतुकर्माहएवश्राद्धं ॥ पुत्रजन्मनि-
तुतद्दिनेवारात्रौवाभुक्तवतोप्रवासिनोवापुत्रजन्मानंतरमेवकार्यं ॥ अत्रसंकल्पादौविशेषः संग्रहे ॥ शर्मायप्रथमांतेनद्वन्द्वोसंकल्पमाचरेत्
नषष्ठ्यायदिवाकुर्यान्महादोषोऽभिजायते ॥ अतस्मद्वृद्धिशब्दानामरूपाणामगोत्रिणां ॥ अनाम्नांचानिलादेश्चनांदीश्राद्धंचसव्यवत् ॥ कारिका-

नां॰श्रा॰ ८

व॥संबंधनामरूपाणिवर्जयेदन्नकर्मणि॥अत्रसव्यवस्तूविश्वेदेवौनन्नूस्थानेद्वौविप्रौमात्रादीनांचप्रत्येकंद्वौद्वौएवंविंशतिब्राह्मणाः॥यद्वामात्रादीनां
त्रयाणांद्वौद्वौएवमष्टौ॥अत्रनापसव्यं॥तिलस्थानेयवाः॥स्वधास्थानेस्वाहाशब्दः॥सव्यजान्वनिपातनाभावः॥नाम्नान्नदानं॥प्राङ्मुखएवकु-
र्यात्प्रदक्षिणमुपचारोऋजुदर्भैःक्रियेत्यादयोविशेषाग्रंथांतरतोज्ञेयाः॥पिंडदानेकुलदेशाचारतोव्यवस्था॥भविष्यपुराणे॥पिंडनिर्वपणंकु-
र्यान्नवाकुर्यान्नराधिप॥वृद्धिश्राद्धेमहाबाहोकुलधर्मानवेक्ष्यतु॥पिंडदानपक्षेविशेषोवसिष्ठेनोक्तः॥दधिकर्कंधुसंमिश्रान्पिंडान्दद्याद्यथाक्रमं
कर्कंधुर्बदरीफलं॥तथाएकैकस्मैपिंडद्वयंदेयं॥एकंनाम्नापरंतूष्णींदद्यात्पिंडद्वयंबुधइतिचतुर्विंशतिमतात्॥अन्यच्चबहवोविशेषाग्रंथांतरतोज्ञेयाः
दाक्षिणात्यानांविस्तृतवृद्धिश्राद्धाचाराभावान्नेहोच्यते॥अथाभ्युदयिकेकर्तृनिर्णयःसायणीये॥नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः॥अतऊ-
र्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकं॥द्वितीयपाणिग्रहणादौवरएवकुर्यादित्यर्थः॥कात्यायनः॥स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु॥पिंडानोद्वाह-
नात्तेषांतस्याभावेतुतत्क्रमात्॥तेषांसुतानामोद्वहनात्प्रथमविवाहपर्यंतंपितास्वपितृभ्यःपिंडान्तदुपलक्षितंवृद्धिश्राद्धंकुर्यात्॥तस्यपितुरभा-
वेतुतस्यसंस्कार्यस्यपितृणांयःक्रमस्तेनक्रमेणपितृव्याचार्यमातुलादिःश्राद्धंदद्यात्स्वपितृभ्यइतिहेमाद्रिणाव्याख्यातं॥जीवत्पितृकस्तुपितु-
र्मात्रादिभ्योवृद्धिश्राद्धंकुर्यात्॥वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति॥येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः॥एतत्साग्निकविषयमित्येके॥वि-
ष्णुः॥पितरिजीवतियःश्राद्धंकुर्यात्सयेषांपिताकुर्यात्तेषांकुर्यात्पितरिपितामहेचयेषांप्रपितामहःपितरिपितामहेप्रपितामहेचनैवदद्यादिति॥आ

प्र०र
१

श्वलायनगृह्यपरिशिष्टेतु ॥ जीवत्पितास्तु सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवत्यां मातामहस्यैव कुर्यादिति ॥ अथास्य शिष्टमनुसाचार
परिगृहीतः संकल्पविधिना प्रयोगः ॥ उपनयनादिमहत्सु कर्मसु पूर्वेद्युर्जातकर्माद्यल्पकर्मसु तदहरेव नांदीश्राद्धं कुर्यात् ॥ तत्रादौ कर्ता कृतसांग
लिकस्नानो धौतवासाः कृतस्वस्त्ययनो नांदीश्राद्धपूर्वांगमातृकापूजनं कुर्यात् ॥ तच्चेत्थं ॥ गोमयोपलिप्ते रंगवल्यादिभिरलंकृते श्राद्धस्थले
प्रतिमास्वक्षतपुंजेषु द्विजातिषु वा यथालाभं संकल्पपूर्वकं मातृपितामहीप्रपितामहीमातामहीमातृपितामहीमातृप्रपितामहीपितृष्वसृमा
तृष्वस्राख्या अष्टौ मातॄः षण्मातॄर्वा यथासंभवं ॥ यद्वा पूर्वोक्ता विनायकाद्या गौर्यादिषोडशमातृः ब्राह्म्यादिसप्तमातृः दुर्गाक्षेत्रपालगणाधिपंचप्रत्येकं
कांडानुसमयेन पदार्थानुसमयेन वा प्रणवादि नमोंतनाममंत्रैरावाहनादिभिरभ्यर्चयेत् ॥ यद्वा गौर्यादिषोडशमातृभ्यो नमः ॥ ब्राह्म्यादिसप्तमातृ
भ्यो नमः इति संक्षेपेण समुदितरूपेणार्चयेत् ॥ तत आनो भद्रा इत्यादि शतं जीव इत्यादि च सूक्तं पठित्वा नांदीश्राद्धसंकल्पं कुर्यात् ॥ तत उपवीती
प्राङ्मुखस्तिथ्यादि संकीर्त्य सत्यवसुसंज्ञका विश्वेदेवाः ॥ नांदीमुखाः ॥ मातृपितामहीप्रपितामह्यः अमुकगोत्राः नांदीमुख्यः ॥ पितृ
पितामहप्रपितामहाः अमुकगोत्राः नांदीमुखाः मातामहमातुःपितामहमातुःप्रपितामहाः अमुकगोत्राः सपत्नीकाः नांदीमुखाः एतानुद्दिश्य संक
ल्पविधानेन नांदीश्राद्धं करिष्य इति संकल्प्य लक्षणलक्षितान्विंशतिसंख्याकानष्टसंख्याकान्वा ब्राह्मणान्पूर्वेद्युः सद्यो वा देवपूर्वकं निमंत्र्य कृता
भ्यंगस्नानानान्पूर्वाह्णे परिचारकैरा कार्यसंबुद्ध्योक्त्या तेषां पादान्प्रक्षाल्य प्राङ्मुखानुपवेश्य षष्ठीविभक्त्यात्वा ऋजुदर्भयुग्मान्यासनं प्रदायापः

नां०श्रा०
१

प्रदायक्षणं दत्वा द्वितीययामंत्रकमावाह्य गंधशुक्लमाल्यधूपदीपाच्छादनाभरणानि प्रथमयाहि द्विर्दत्वा मधुरद्रव्यसहितमनस्कमन्नं परिविष्य पृथिवी
तेपात्रमित्याद्युक्त्वा चतुर्थ्यंतेत्यास्वाहाहव्यं नमेति सर्वत्र स्यक्तो तृप्येषुपास्मेगायनेति पञ्चानां काश्यपो सितः सोमो गायत्रीजपे विनियोगः॥ एनाः पंचर्चः श्रा
वयित्वा तेरुत्तरापोशनादौ कृते हस्तशौचाद्यादिकं कृत्वा द्राक्षामलकतन्निष्क्रयं वा दक्षिणां दत्वा॥ ॐ मातापितामही चैव तथैव प्रपितामही॥ पितापितामह
श्चैव तथैव प्रपितामहः॥ मातामहस्तत्पिता च प्रमातामहकादयः॥ एते भवंतु सुप्रीताः प्रयच्छंतु च मंगलमित्युक्त्वा कृतांजलिः संप्रार्थ्य प्रणिपत्य ब्राह्म
णान्विसृज्याचम्य गौर्यादीन्विसर्जयेत्॥ अथान्योपि संक्षिप्तः शिष्टैः क्रियमाणो वृद्धिश्राद्धप्रयोगः॥ पूर्ववद्गौर्यादीनां ब्राह्मण्यादीनां च पूजां कृत्वा सदूर्वांकु
रान्क्षतान्जलं चादाय सत्यवसुसंज्ञका विश्वेदेवा नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यं॥ मातृपितामहीप्रपितामह्यः नांदीमुख्यः भूर्भुवः स्वः इदं वः पाद्यं॰
पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भु॰ इदं वः पा॰ मातामहमातुःपितामहमातुःप्रपितामहाः नांदीमुखाः सपत्नीकाः भूर्भुवः स्वः इदं वः पाद्यमि-
त्युक्त्वा सर्वत्र पात्रे सदूर्वाक्षतजलं क्षिपेत्॥ एवमेव पुनः सत्यादीन्विश्वान्देवान्मात्रादीः पित्रादीन्मातामहादींश्च त्रीन्संबुद्ध्योक्त्वा पूर्ववद्यथाहति भि
रिदमासनं गंधाद्युपचारकल्पनं स्वाहा नममेति दूर्वाक्षतगंधपुष्पजलानि प्रत्येकं पात्रे निक्षिपेत्॥ ततो विनायकाद्याः गौर्यादिषोडशमातरो ब्राह्म्यादिसप्त
मातरश्च भूर्भुवः स्वः इदं दास्यमानं वा युग्मब्राह्मणभोजनपर्याप्तमन्नं यथाशक्तिसोपस्करं अमृतरूपेण स्वाहा नममेति दूर्वादीन्निक्षिपेत्॥ एवं विश्वे
भ्यो देवेभ्यो मात्रादिभ्यः पित्रादिभ्यो मातामहादिभ्यः सपत्नीकेभ्यः संबुद्ध्या दद्यात्॥ अन्नासंभवे अन्नपदस्थाने इदं दास्यमानं वासोपस्करमाम-

भिरितिवदेत् ॥ तच्चचतुर्गुणंद्विगुणंसमंवा शक्त्यासंकल्पयेत् ॥ आमासंभवेपियुग्मब्राह्मणभोजनपर्याप्ताष्टगुणंचतुर्गुणंद्विगुणंसमंवाहिरण्यं
हिरण्यप्रतिनिधिभूतंद्रव्यंवेतिवदन्शक्त्यासंकल्पयेत् ॥ एवंदशभ्यःसंकल्पयेत् ॥ ततःपूर्ववत्उपास्मैइत्यादिपंचर्चःश्रावयित्वाकृतस्यवृद्धि
श्राद्धस्यसंपूर्णतासिद्ध्यर्थेद्राक्षामलकेतत्प्रतिनिधित्वेनद्रव्यदक्षिणांसंप्रददेनममेत्यक्त्वाप्रजापतेनत्वदितिमंत्रंजप्त्वाअनेननांदीश्राद्धेननांदी
मुखदेवताःप्रीयंतांवृद्धिरस्तु ॥ मातापितामहीचैवेतिउक्तश्लोकद्वयंजपेत् ॥ ततःआचारतःकिंचिद्व्यंइळामग्नइतिमंत्रंजपन्संकल्पमात्रेण-
संघट्टनेनशब्दंकुर्यादिति ॥ ततोमातृकाविसर्जयेत् ॥ जीवन्मातृकस्यनमातृपार्वणं ॥ जीवन्मातामहस्यनमातामहपार्वणं ॥ द्वारलोपात् ॥ जीवत्
पितृकस्तुयेभ्यःपितादद्यात्तेभ्योदद्यादित्युक्तमेव ॥ ॥ इतिश्रीरामेश्वरभट्टसुतश्रीनारायणभट्टविरचितेप्रयोगर० वृद्धिश्राद्धप्रयोगसहि
तोनिर्णयः ॥ ॥ अथकौतुकबंधप्रयोगः ॥ ॥ सच्चप्रचुराचाराभावात्संक्षेपतःसूक्तादिमात्रंगृहीत्वालिख्यते ॥ आचार्योदर्भमयकूर्चेउदकुं-
भंनिधायसाक्षतकांस्यपात्रेपंचगुणीकृतंकार्पाससूत्रंनिधायतत्समीपेप्राङ्मुखंयजमानमुपवेश्यसकुशहस्तैःसहकुंभोदकेनतत्सूत्रंमंत्रै
रभिषिंचेत् ॥ तेचमंत्राः ॥ तत्सवितुर्विश्वामित्रःसवितागायत्री ॥ अग्निमीळेमधुच्छंदाअग्निर्गायत्री ॥ सूत्रप्रोक्षणेवि० ॥ एवमुत्तरत्र ॥ इषेत्वोर्जे-
त्वा ॥ अग्नआयाहिवीतये ॥ शंनोदेवीरभिष्टये० ॥ आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्धमाना ॥ सप्तमीप्रतिष्ठा
अंत्येद्वेअनुष्टुभौ ॥ एतोन्विंद्रमांगिरसस्तिरश्चीरिंद्रोनुष्टुप् ॥ ऋतंचेतितृचस्याघमर्षणोभाववृत्तोदेवता ॥ अनुष्टुप्छंदः ॥ प्रशर्धायश्यावाश्वो

मरुतोजगती ॥ स्वस्तिनोमिमीतास्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् ॥ स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाः पवमानसोमोगायत्री ॥ र-
क्षोहणमितिपंचविंशत्यृचस्यसूक्तस्य भरद्वाजः पायूरक्षोहाग्निस्त्रिष्टुप् ॥ अंत्याश्चतस्रोनुष्टुभः ॥ रात्रीव्यख्यदित्यष्टर्चस्यसूक्तस्यसोभरिः
कुशिकोरात्रिर्वाभारद्वाजोरात्रिस्तवगायत्री ॥ कृणुष्वेतिपंचदशर्चस्यसूक्तस्यवामदेवोरक्षोहाग्निस्त्रिष्टुप् ॥ तरत्समंदीतिचतुर्णाअवत्सारःपवमानसो
मोगायत्री ॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणःपुरुषोनुष्टुबंत्यात्रिष्टुप् ॥ विष्णोर्नुकमितिषळृचस्य औचथ्योदीर्घतमाविष्णुस्त्रिष्टु
प् ॥ अतोदेवाइतिषडृचस्यसूक्तस्यकाण्वोमेधातिथिर्विष्णुर्गायत्री ॥ परोमात्रयेतिसप्तर्चस्यसूक्तस्य ॥ मैत्रावरुणिर्वसिष्ठोविष्णुस्त्रिष्टुप् ॥ हिर
ण्यवर्णामितिपंचदशर्चस्यसूक्तस्यानंदःकर्दमश्चिक्लीतेंदिरासुताऋषयः ॥ श्रीरग्निर्देवते ॥ आद्यास्तिस्रोनुष्टुभः ॥ कांसोस्मितेतिबृहती
उत्तरयोस्त्रिष्टुप् ॥ अष्टावनुष्टुभोंत्याप्रस्तारपंक्तिः ॥ यज्जाग्रतइत्याद्याःशिवसंकल्पाख्याःषण्मंत्राःपरशाखीयाः ॥ विहिहोत्रेतिपंचर्चस्यसूक्तस्य
वामदेवोगोतमोवायुरनुष्टुप् ॥ मुंचामित्वेतिपंचर्चस्यसूक्तस्यप्राजापत्योयक्ष्मनाशनइंद्रस्त्रिष्टुप् ॥ अंत्यानुष्टुप् ॥ स्योनापृथिवीतिमेधातिथिर्भू
मिर्गायत्री ॥ द्रविणोदाआंगिरसःकुत्सोद्रविणोदाग्निस्त्रिष्टुप् ॥ सवितापश्चातान्नाकोलुशोविश्वेदेवाजगती ॥ नवोनवोभवतिसूर्यासावित्री
चंद्रमास्त्रिष्टुप् ॥ विद्युन्नयापतंतीतिपुरूरवाउर्वशीत्रिष्टुप् ॥ उलूकयातुवसिष्ठइंद्रस्त्रिष्टुप् ॥ पिशंगभृष्टिंदेवोदासिःपरुच्छेपइंद्रोगायत्री ॥ एतैःस
र्वमंत्रैःसूत्रमभिषिच्य ॥ जातवेदसेमारीचःकश्यपोजातवेदाअग्निस्त्रिष्टुप् ॥ अनेनगंधेनसूत्रंविलिप्य ॥ विश्वेत्तातेभार्गवोनेमइंद्रोजगती ॥ अनेनपुंसोदक्षिण

हस्तेवबध्नीयात् ॥ श्रियेजातः काण्वः पवमानःसोमस्त्रिष्टुप् ॥ अनेनस्त्रियावामहस्तेवध्नीयात् ॥ ततआचार्योऽऋत्विजश्चयजमानस्यमंत्रैरक्षांकु
र्युः ॥ तेचमंत्राः ॥ शतंजीवेतिद्वयोःप्राजापत्योयक्ष्मनाशनइंद्रस्त्रिष्टुप् ॥ अंत्यानुष्टुप् ॥ येयज्ञेनेत्यस्यर्चस्यसूक्तस्यमानवोनाभानेदिष्ठोविश्वेदे
वाआद्याश्चतस्रोजगत्यः ॥ पंचम्यनुष्टुप् ॥ षष्ठीबृहती ॥ सप्तमीसतोबृहती ॥ अष्टम्यनुष्टुप् ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ एतैर्मंत्रैरक्षायांकृतायां
यजमानःकृतकर्मसाद्गुण्यार्थमाचार्यायऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदद्यात् ॥ अन्येभ्योपिभूयसींदद्यादिति ॥ ॥ इतिश्रीमद्रु० रा० ना
रायण० प्र० कौतुकबंधप्रयोगः ॥ ॥ अथग्रहयज्ञः ॥ ॥ सचनित्यनैमित्तिककाम्यभेदेनत्रिधा ॥ अयनविषुवोपरागादिषुनित्यः ॥ गर्भाधानादि
कर्मप्रारंभेषुनैमित्तिकः ॥ विपदपगमसंपदादिकामनायांकाम्यः ॥ अत्रमूलान्याकरतोज्ञेयानि ॥ ग्रहरूपादिज्ञात्वाकर्मकार्यम् ॥ अन्यथाविफ
लं ॥ तदाहाश्वलायनाचार्यः ॥ रूपवर्णायुधस्थानमंडलासनवाहनान् ॥ समित्कुंडोपहारांश्चपुष्पंरत्नाकृतीरपि ॥ गायत्रीमूलमंत्रांश्चनामसं
त्रांश्चकेवलान् ॥ अधिप्रत्यधिदेवानांमंत्रांश्चर्ष्यादिसंयुतान् ॥ तत्तन्मूर्तीश्चजानीयाद्दोषघ्नंचन्नवग्रहान् ॥ अज्ञात्वैवप्रमानिष्ट्वातत्फलंनैवविं
दति ॥ दुःखंचाप्नोतिसुमहद्यत्नादिष्ट्वाप्यवित्पुमानिति ॥ गायत्रीग्रहगायत्रीप्रयोगेवक्ष्यते ॥ वर्णादयश्च ॥ मंडपकुंडादिकाम्येयथोक्तंकार्यं ॥ नित्य
नैमित्तिकयोस्त्वनित्यं ॥ नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपमितिमात्स्योक्तेः ॥ कुंडेवास्थंडिलेपिवेति आचार्योक्तेश्च ॥ मंडपलक्षणंहेमा-
द्रौमत्स्यपुराणे ॥ गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः ॥ रुद्रायतनभूमौवाचतुरस्रमुदक्प्लवं ॥ दशहस्तानथाष्टौवाहस्तान्कुर्याद्विधानतः ॥

तस्यद्वाराणिचत्वारिकर्तव्यानिविचक्षणैः ॥ कुंडंचस्कंदपुराणे ॥ नवग्रहमखेकुंडंहस्तमात्रंसमंततः ॥ चतुरस्रमधोहस्तंयोनिवक्त्रंसमेखलं ॥ चतुरंगु
लविस्तारामेखलातद्वदुच्छ्रिता ॥ मात्स्ये ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्ताङ्गुलविस्तृता ॥ कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता ॥ गजो
ष्ठसदृशीतद्वदायताच्छिद्रसंयुता ॥ मेखलोपरिसर्वत्र अश्वत्थदलसन्निभा ॥ गजोष्ठतुल्याश्वत्थदलतुल्यावेतिविकल्पः ॥ साचयोनिःपश्चिमतःका
र्या ॥ पश्चिमेमध्यभागेतुयोनिंकुर्याद्विधानतइतिगर्गोक्तेः ॥ मात्स्ये ॥ मानहीनाधिकंकुंडमनेकभयदंभवेत् ॥ तस्यचोत्तरपूर्वेतुस्थंडिलंहस्त-
मात्रकं ॥ त्रिवप्रंचतुरस्रंचवितस्त्युच्छ्रायसंमितं ॥ स्थंडिलंवेदिः ॥ वप्रामेखलाः ॥ द्व्यंगुलोच्छ्रितोवप्रःप्रथमःसमुदाहृतः ॥ अंगुलोच्छ्रायसंयु
क्तंवप्रद्वयमथोपरि ॥ द्व्यंगुलस्तत्रविस्तारःसर्वेषांकथितोबुधैरिति ॥ अन्यत्सर्ववर्णदर्शनामादिप्रयोगेस्पष्टीभविष्यति ॥ ॥ अथग्रहयज्ञप्र
योगः ॥ ॥ यजमानःस्नात्वानित्यकर्मनिर्वर्त्यमौहूर्तिकोक्तेशुभेकालेदेशकालौसंकीर्त्य अयनादिनित्यकालेषुसंकल्पयेत् ॥ ग्रहानुकूल्यसि
द्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइति ॥ गर्भाधानादिनिमित्तेषुअमुककर्मकर्तुमादौग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रह
यज्ञंकरिष्यइति ॥ विपदपगमादिकामनायांतु अमुककामनासिद्धिद्वाराश्रीपर०र्थंग्रह०क०इति ॥ ततःसंभारान्संभरेत् ॥ तत्रनित्यनैमित्ति-
कयोःप्रतिपदोक्तवस्तूनितदभावेनुकूलरूपाणिवायथाशक्तिसंपादयेत् ॥ काम्येतुप्रतिनिध्यभावात् प्रतिपदोक्तवस्तून्येव ॥ ततआचार्यादिव
रणं ॥ तत्रविधिज्ञंस्वशाखाविदंसाचारमेकं अस्मिन्ग्रहमखेत्वमाचार्यकंकुर्वितिपाणिनापाणिंसुपरिस्पृश्यवृणुयात् ॥ अन्यानार्त्विज्यंकुर्विति-

प्रत्येकंशृणुयात् ॥ तेचहोमानुसारेणचत्वारोष्टौषोडशवातेचकरिष्यामीत्युक्त्वा आचामेयुः ॥ ततोयजमानस्तान्यथाशक्त्यर्चयेत् ॥ ततआचार्यःकर्म
संकल्पपूर्वकंगृहादुत्तरतऐशान्यांवाकृतायांचतुर्दिक्षुहस्तमात्रावरायांचतुरस्रित्र्यंगुलप्रमाणत्रिभूमिकायांग्रहवेद्यांशुक्लव्रीहितंडुलैःसकर्णिक
मष्टदलमंबुजमुल्लिख्यकर्णिकायांदलेषुचवर्तुलादिग्रहपीठानितत्तद्वर्णाक्षतैर्यथोपपन्नैर्वाकुर्यात् ॥ तानीत्थं ॥ मध्येरक्ताक्षतैर्वर्तुलं ॥ आग्नेय
दलेशुक्लाक्षतैश्चतुरस्रं ॥ दक्षिणदलेरक्ताक्षतैस्त्रिकोणं ॥ ईशानदलेहरिताक्षतैर्बाणाकारं ॥ उत्तरदलेपीताक्षतैर्दीर्घचतुरस्रं ॥ पूर्वदलेशुक्ला
क्षतैःपंचकोणं ॥ पश्चिमदलेकृष्णाक्षतैश्चापाकारं ॥ नैर्ऋत्यदलेकृष्णाक्षतैःशूर्पाकारं ॥ वायव्यदलेचित्राक्षतैर्ध्वजाकारमिति ॥ ततउदीच्यांरंगव
ल्लिकारंजितपद्मोपरिधृतधान्यपीठेनवमव्रणमकालकंतैजसंमृन्मयंवातुलिसमलंकृतंशुभमभिषेककुंभंनिधाय ॥ इमंमेगंगइत्यस्यसिंधुक्षि
त्प्रैयमेधोनदीस्तुतिर्जगती ॥ अनेनपुण्यजलेनपूरयित्वा ॥ नवसूत्रेणावकुंभंसुगंधेनचावेष्ट्यहयगजवल्मीकहृदगोष्ठराजद्वारचतुष्पथमृदः ॥
उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतमितिकुंभेनिक्षिप्य ॥ रुद्रंतापिमइत्यस्यवैश्वामित्रोरेणुःपवमानसो
मोजगती ॥ अनेनन्यग्रोधाश्वत्थप्लक्षजंबूचूतवृक्षत्वचः ॥ प्रवोयज्ञेष्वित्यस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ अनेनतेषांपल्लवान्निक्षिप्य ॥ आप्यायस
स्वेत्यस्यराहूगणोगोतमःसोमोगायत्री ॥ अनेनगोक्षीरं ॥ दधिक्राव्णइत्यस्यगोतमोवामदेवोदधिक्रावानुष्टुप् ॥ अनेनदधि ॥ शुक्रमसिज्योति
रसितेजोसि ॥ इतिघृतं ॥ गंधद्वारामित्यस्यानंदःश्रीरनुष्टुप् ॥ अनेनगोमयं ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ अनयागोमूत्रंचनिक्षिप्य

र्त्नो हिरण्यानां। अस्य श्यावाश्व ऋषिः सविता गायत्री॥ अनेन नवरत्नानि हीरकमौक्तिकपद्मरागनीलमरकतगोमेदपुष्पराग वैडूर्यप्रवालाख्यानि॥ या ओषधीरि
त्यस्याथर्वणो भिषग् ओषधयोऽनुष्टुप्॥ अनेन शतौषधानि॥ तदभावे दशमूलानि तदभावे स्कुवर्ण वा॥ गंधद्वारामिति गंधं निक्षिप्य॥ सर्वे समुद्राः॥ गं
गे च यमुने चैव त०॥ इमं मे गंगे यमुने इत्येतैर्मंत्रैः॥ आपो हि ष्ठेति तिसृणां सूक्तस्यांबरीषः सिंधुद्वीप आपो गायत्री॥ पंचमी वर्धमाना॥ सप्तमी प्रतिष्ठा
अंत्ये द्वे अनुष्टुभौ॥ अनेन सूक्तेन उदकुंभं पूरयेत्॥ नहि ते क्षत्रमित्याद्येकविंशत्यृचानामाजीगर्तिः शुनःशेपो वरुण आद्या दश त्रिष्टुभः॥ शिष्टा गाय
त्र्य[illegible]ः॥ स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छंदाः पवमानसोमो गायत्री॥ अनेन सूक्तेन च तं कुंभमभिमंत्रयेत्॥ यद्वा कलशाभिमंत्रणेऽन्यं मंत्र
विदं युंजीत॥ ततः कर्म संकल्प्य विधिवत्स्वस्तिवाचनं कृत्वा ग्रहवेदौ पद्मपीठे यथास्थानं यथामुखं ग्रहप्रतिमाः स्थापयित्वा तद्दक्षिणवामपार्श्वयोर
धिदेवताप्रत्यधिदेवते तदभिमुखौ स्थापयेत्॥ तदभावे पुष्पाक्षतादिष्वावाहयेत्॥ तत्रायं प्रकारः॥ अद्येत्या० ग्रहपीठदेवतास्था० क०॥ प्रणवस्य पर
ब्रह्म ऋषिः॥ परमात्मा देवता॥ दैवी गायत्री छंदः॥ व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतय ऋषयः॥ अग्निवायुसूर्यप्रजापतयो देवताः
गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि॥ आदित्याद्यावा० ग०॥ ॐ भूरादित्यमा० मि॥ ॐ भुवरा० मि॥ ॐ स्वरा० मि॥ ॐ भूर्भुवः स्वरा० मि॥ आ कृष्णेनेत्यस्य
हिरण्यस्तूपः सविता त्रिष्टुप्॥ आ कृष्णे० क०मुच्चार्य॥ भगवन्नादित्य ग्रहाधिपते काश्यपगोत्र कलिंगदेशेश्वर जपापुष्पोपमाङ्गद्युते द्विभुज पद्माभयहस्त सिंदू
रवर्णांबरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वांगाभरण भास्कर तेजोनिधे त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते सप्ताश्वारूढ रुणध्वजपताकोपशोभित नरमास्वरथ

वाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाग्निरुद्राभ्यांसहपद्मकर्णिकायांताम्रप्रतिमांप्राङ्मुखींवर्तुलपीठेधितिष्ठपूजार्थंत्वामावा॰मीत्यादि॰वाहयेत्॥तद्दक्षि
णपार्श्वे॥ॐ भूरादित्याधिदेवतामग्निमावा॰ ॐ भुवरादित्याधिदेवतामग्निमावा॰ ॐ स्वरादित्याधिदेवतामग्नि॰॥ॐ भूर्भुवःस्वरादित्याधिदे॰
मग्नि॰॥अग्निंदूतमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री॥इमंमंत्रमुच्चार्य पिंगभ्रूश्मश्रुकेशंपिंगाक्षंत्रिनयनंअरुणवर्णंछागस्थंसाक्षसूत्रंस
प्तार्चिषंशक्तिधरंवरदहस्तंहूयमादित्याधिदेवतामग्निमावा॰॥तद्वामपार्श्वे॥ॐ भूरादित्यप्रत्यधिदेवतंरुद्रमा॰ ॐ भुवरादित्य[illegible]प्रत्यधि॰रु॰
ॐ स्वरादित्यप्र॰रु॰ॐ भूर्भुवःस्वरादि॰प्र॰रु॰॥त्र्यंबकमित्यस्यवसिष्ठोरुद्रोनुष्टुप्॥इमंमंत्रमुच्चार्यत्रिलोचनंपंचवक्त्रंवृषारूढंकपालशूलखट्
वांगधारिणंचंद्रमौलिं सदाशिवमादित्यप्रत्यधिदेवतंरुद्रमा॰॥ततःआग्नेयदले ॥ॐ भूःसोममावा॰ ॐ भुवःसोममावा॰ ॐ स्वःसोममावा॰
ॐ भूर्भुवःस्वःसोममा॰ आप्यायस्वेत्यस्यगोतमःसोमोगायत्री॥इमंमंत्रमुच्चार्य भगवन्सोमद्विजाधिपतेसुधामयशरीरात्रिगोत्रयमुनादेशो
श्वरगौक्षीरधवलांगकांतेद्विभुजगदावरदानांकितशुक्लांबरमाल्यानुलेपनसर्वांगाभुक्तमौक्तिकाभरणरमणीयसमस्तलोकाप्यायकदेवतास्वाध
मूर्नेनमस्तेसन्नद्धधवलध्वजपताकोपशोभितेनदशश्वेताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाङ्गिरुमयासहपद्माग्नेयदलमध्येस्फाटिकप्र-
तिमांप्रत्यङ्मुखींचतुरस्रपीठेधितिष्ठपूजार्थंत्वामावाहयामि॥तद्दक्षिणपार्श्वेपूर्ववत्॥व्यस्तसमस्तव्याहृत्युच्चारणानंतरंअप्सुमइत्यस्यसिंधुद्वीप
आपोगायत्री॥इमंमंत्रमुच्चार्यस्त्रीरूपधारिणीःश्वेतवर्णामकरवाहनाःपाशकलशधारिणीर्मुक्ताभरणभूषिताःसोमाधिदेवताअपआवा॰॥तद्वा

मपार्श्वे व्यस्तसमस्तव्याहृत्युच्चारणानंतरं ॥ गौरीर्मिमायेत्यस्य दीर्घतमा उमा जगती ॥ इमं मंत्रमुच्चार्य अक्षसूत्रकमलदर्पणकमंडलुधारिणीं त्रिदशपूजि
तां सोमप्रत्यधिदेवतामुमामावाहयामि ॥ दक्षिणदले पूर्ववत्प्रणवव्याहृत्युच्चारणानंतरं ॥ अग्निर्मूर्धेत्यस्य विरूपोंगारको गायत्री ॥ इमं मंत्रमुच्चार्य भ
गवन्नंगारकाग्न्याकृते भारद्वाजगोत्रावंतिदेशेश्वर ज्वालापुंजोपमांगद्युते चतुर्भुज शक्तिशूलगदाखड्गधारिन्रक्तांबरमाल्यानुलेपन प्रवालाभरण
भूषितसर्वांग दुराल्लोकदोसेन नमस्ते सन्नद्धरक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ भूमिस्कंदाभ्यां सह प्रद
क्षिणदलमध्ये रक्तचंदनप्रतिमां दक्षिणामुखीं त्रिकोणापीठे धितिष्ठ पूजार्थं त्वामा० ॥ तद्दक्षिणपार्श्वे व्याहृत्युच्चारणानंतरं स्योना पृथिवीत्यस्य काण्वो मे
धातिथिः पृथिवी गायत्री ॥ इमं मंत्रमुच्चार्य शुक्लवर्णां दिव्याभरणभूषितां चतुर्भुजां सौम्यवपुषं खड्गाशूकसहशांबरां रत्नपात्रसस्यपात्रौषधिपात्रपद्मोपेत-
करां चतुर्दिङ्नागपृष्ठगतां अंगारकाधिदेवतां भूमिं आवाहया० ॥ तद्वामपार्श्वे व्याहृत्युच्चारणानंतरं ॥ कुमारश्चित्पितरमित्यस्य गृत्समदः स्कंदस्त्रिष्टुप् ॥
इमं मंत्रमुच्चार्य षण्मुख सर्वशिखंडकविभूषण रक्तांबरधर मयूरवाहन कुक्कुटघंटापताकाशक्त्युपेत चतुर्भुज मंगारकप्रत्यधिदेवतां स्कंदं आवा० ॥ ततः प्रा-
गुत्तरदले पूर्ववद्व्याहृत्युच्चारणानंतरं ॥ उद्बुध्यध्वमित्यस्य बुधः सौम्यस्त्रिष्टुप् ॥ इमं मंत्रमुच्चार्य भगवन्सौम्य सौम्याकृते सर्वज्ञानमय आत्रेयगोत्र मगध
देशेश्वर कुंकुमवर्णांगद्युते चतुर्भुज खड्गखेटकगदावरदानांकित पीतांबरमाल्यानुलेपन मरकताभरणालंकृतसर्वांग विबुधपतेन मस्ते सन्नद्ध पीतध्वज
पताकोपशोभितेन चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरुषाभ्यां सह पद्मेशानदलमध्ये स्वर्णप्रतिमामुदङ्मुखीं बाणाकारपीठे

धिष्ठितिष्ठ पूजार्थं त्वामावा०॥ ततस्तत्पार्श्वयोरधिप्रत्यधिदेवतयोरावाहनं॥ व्याहृतीरुच्चार्य इदं विष्णुरित्यस्य काण्वो मेधातिथिर्विष्णुर्गायत्री॥ सहस्र
शीर्षेत्यस्य नारायणः पुरुषोनुष्टुप्॥ इमौ मंत्रावुच्चार्य॥ कौमोदकीपद्म शंखचक्रोपेतां चतुर्भुजां सौम्याधिदेवतां विष्णुमावा०॥ प्रत्यधिदेव
तां पुरुषमावाह०॥ तदुत्तरदले पूर्ववद्व्याहृत्यनंतरं॥ बृहस्पते अतीत्यस्य गृत्समदो बृहस्पतिस्त्रिष्टुप्॥ इमं मंत्रमुच्चार्य भगवन् बृहस्पते सम
स्तदेवताचार्यांगिरसगोत्र सिंधुदेशेश्वर दीप्तसुवर्णसदृशांग दीप्तचतुर्भुज दंडकमंडल्वक्षसूत्रवरदानांकित पीतांबरमाल्यानुलेपन पुष्परागम
याभरणरमणीय समस्तविद्याधिपते नमस्ते सन्नद्ध पीतध्वजपताकोपशोभितेन पीतांबरयवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेंद्र ब्रह्मभ्यां सह
पद्मोत्तरदलमध्ये सुवर्णप्रतिमासुदङ्मुखोदीर्घचतुरस्रपीठेधितिष्ठ पूजार्थं त्वामावाहयामि॥ तद्दक्षिणपार्श्वे व्याहृत्युच्चारणानंतरं॥ इंद्रश्रेष्ठा-
नीत्यस्य गृत्समद इंद्रस्त्रिष्टुप्॥ इमं मंत्रमुच्चार्य चतुर्दंतगजारूढं वज्रांकुशधरं शचीपतिं नानाभरणभूषितं बृहस्पत्यधिदेवतमिंद्रमावा०॥ वा
मपार्श्वे व्याहृत्युच्चारणानंतरं ब्रह्मणातेब्रह्मयुजेत्यस्य विश्वामित्रो ब्रह्मात्रिष्टुप्॥ इमं मंत्रमुच्चार्य पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रु
वपुस्तककमंडलुधारिणं कृष्णाजिनवाससं पार्श्वस्थितहंसं बृहस्पतिप्रत्यधिदेवतां ब्रह्माणमावाह०॥ प्राग्दले पूर्ववद्व्याहृत्यनंतरं॥ शुक्रं-
ते अन्यदित्यस्य भरद्वाजः शुक्रस्त्रिष्टुप्॥ इमं मंत्रमुच्चार्य॥ भगवन् भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रजतोज्ज्वलांगकां
ते चतुर्भुज दंडकमंडल्वक्षसूत्रवरदानांकित शुक्लांबरमाल्यानुलेपन वज्राभरणभूषित सर्वांग समस्तनीतिशास्त्रनिपुण मतेन नमस्ते सन्नद्ध शु

कुध्वजपताकोपशोभितेन शक्रकुलाश्वसहितेन रथेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेंद्राणींद्राभ्यां सह पद्मपूर्वदलमध्ये रजतप्रतिमां प्राङ्मुखीं पंचकोणपीठे-
स्थितिष्ठ पूजार्थं त्वामावाहयामि ॥ तद्दक्षिणपार्श्वे व्याहृत्य कृत्वा॰ तरं ॥ इंद्राणीमासु इत्यस्य वृषाकपिरिंद्राणी पंक्तिः ॥ इमंमंत्रमुच्चार्य संतानमंजरीवर
दानद्विभुजां शक्राधिदेवतामिंद्राणीमावा॰ ॥ वामपार्श्वे पूर्ववत्॰ तरं ॥ इंद्रमिद्देवतातय इत्यस्य मेधातिथिरिंद्रः प्रगाथो बृहती ॥ इमंमंत्रमुच्चार्य च
तुर्दंतगजारूढं वज्रांकुशधरं शचीपतिं नानाभरणभूषितं भार्गवप्रत्यधिदेवतामिंद्रमा॰ ॥ पश्चिमदले पूर्ववद्व्याहृत्यनंतरं ॥ शमग्निरित्यस्यारिरिंबि-
ठिः शनैश्चर उष्णिक् ॥ इमंमंत्रमुच्चार्य भगवन् शनैश्चर भास्करतनय काश्यपगोत्र सौराष्ट्रदेशेश्वर कज्जलनीलांगकांते चतुर्भुज चापतूणीरकृ-
पाणाभयांकित नीलांबरमाल्यानुलेपन नीलरत्नभूषणालंकृतसर्वांग समस्तभुवनभीषणामर्षमूर्ते नमस्ते संनद्धनीलध्वजपताकोपशोभितेन
नीलगृध्ररथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ प्रजापतियमाभ्यां सह पद्मपश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं चापाकारपीठेस्थितिष्ठ
पूजार्थं त्वामावाहया॰ ॥ तद्दक्षिणपार्श्वे पूर्ववत्॰ तरं ॥ प्रजापतेनत्वदित्यस्य हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ इमंमंत्रमुच्चार्य यज्ञोपवीतिनं हंसस्थ
मेकवक्त्रमक्षमालास्रुवपुस्तककमंडलुसहितं चतुर्भुजं शनैश्चराधिदेवतां प्रजापतिमावा॰ ॥ वामपार्श्वे पूर्ववत्॰ तरं ॥ यमाय सोममित्यस्य यमोय-
मोनुष्टुप् ॥ इमंमंत्रमुच्चार्य ईषत्पीनं दंडहस्तं रक्तदृष्टिं पाशधरं कृष्णवर्णं महिषारूढं सर्वाभरणभूषितं शनैश्चरप्रत्यधिदेवतां यममावा॰ ॥ प्रत्यग्द-
क्षिणदलाग्रे पूर्ववत्॰ नंतरं ॥ कयानश्चित्र इत्यस्य वामदेवो राहुर्गायत्री ॥ इमंमंत्रमुच्चार्य ॥ भगवन् राहो रविसोमप्रमर्दन सिंहिकानंदन पैठीनसगो

र्बबर्बरदेशेश्वरकालमेघद्युतेव्याघ्रवदनचतुर्भुजखड्गचर्मशूलवरदानांकितकृष्णांबरमाल्यानुलेपनगोमेदकाभरणभूषितसर्वांगशौर्यनिधेनम-
स्तेसन्निहकृष्णध्वजपताकोपशोभितेनकृष्णसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छसर्पकालाभ्यांसहपश्चिमनैर्ऋत्यदलमध्येसीसकमूर्तिमां
दक्षिणामुखंशूर्पाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ पूर्ववद्व्याहृतीरुच्चार्य आयंगौरितिमंत्रस्यसार्पराज्ञीसूर्पागा
यत्री ॥ इमंमंत्रमुक्त्वा अक्षसूत्रधरानुकुंडलिकाकारपुच्छयुक्तानेकभोगान् भीषणान्राह्वधिदेवताःसर्पानावाह० ॥ वामपार्श्वे पूर्ववं
द्व्याहृतीरुक्त्वा ॥ परंमृत्योरित्यस्यसंकुशिकोमृत्युस्त्रिष्टुप् ॥ इमंमंत्रमुच्चार्यकरालवदनंनीलांगभीषणंपाशदंडधरंसर्पवृश्चिकरोमाणंराहु
प्रत्यधिदेवतांकालमावा० ॥ प्रत्यगुत्तरदलेपूर्ववद्व्याहृतीरुक्त्वा ॥ केतुंकृण्वन्नित्यस्यमधुच्छंदाःकेतुर्गायत्री ॥ इममंत्रमुच्चार्य भगवन्केतोका-
मरूपजैमिनिगोत्रमध्यदेशेश्वरधूम्रवर्णध्वजाकृतेद्विभुजगदावरदानांकितचित्रांबरमाल्यानुलेपनवैडूर्यमयाभरणभूषितसर्वांगचित्रशक्ते
नमस्तेसन्निहचित्रध्वजपताकोपशोभितेनचित्रकपोतरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छब्रह्मचित्रगुप्ताभ्यांसहवायव्यदलमध्येकांस्य
प्रतिमांदक्षिणामुखंध्वजाकारपीठेधितिष्ठपूजार्थंत्वामावा० तद्दक्षिणपार्श्वेपूर्ववद्व्याहृत्यनंतरंब्रह्मजज्ञानमित्यस्यवामदेवोब्रह्मात्रिष्टुप्
इमंमंत्रमुच्चार्यपद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थितहंसंकेत्वधिदेवताब्रह्माण
मावा० ॥ वामपार्श्वेपूर्व०नंतरं ॥ सवित्रंचित्रमित्यस्यभरद्वाजश्चित्रगुप्तस्त्रिष्टुप् ॥ इममंत्रमुच्चार्यउदीच्यवेषंसौम्यदर्शनंलेखनीपत्रोपे-

तं द्विभुजं केतुप्रत्यधिदेवतां चित्रगुप्तमावा० ॥ अथ कर्मसाद्गुण्यकरदेवतावाहनं शङ्कुनंडुलपीठेषु कुर्यात् ॥ शनेर्वामप्रदेशे व्याहृत्यनंतरं ॥ आतून-
इंद्रेत्यस्य काण्वः कुसीदो विनायको गायत्री ॥ इमं मंत्रमुक्त्वा ॥ चतुर्भुजं त्रिनेत्रं गजाननं नागयज्ञोपवीतिनं चंद्रधरं दंताक्षमालापरशुमोदको-
पेतं विनायकमावा० ॥ तद्दक्षिणतो व्याहृत्यनंतरं ॥ जातवेदस इत्यस्य कश्यपो दुर्गा त्रिष्टुप् ॥ इमं मंत्रमुक्त्वा ॥ शक्तिबाणशूलखड्गचक्रचंद्र-
बिंबखेटकपालपरशुटंकोपेतं दशभुजां सिंहारूढां दुर्गाख्यां दैत्यासुरहारिणीं दुर्गामावा० ॥ तद्दक्षिणतो व्याहृत्यनंतरं ॥ क्षेत्रस्य पतिनेत्यस्य-
क्षेत्राधिपतिरनुष्टुप् ॥ इमं मंत्रमुक्त्वा ॥ श्यामवर्णं त्रिलोचनमूर्ध्वकेशं सुदंष्ट्रं भ्रूकुटीकुटिलाननं नूपुरालंकृतांघ्रिं सर्पमेखलायुतं सर्वांगमति
कुंद्दक्षुद्रघंटावबद्धगुल्फावलंबिकरोटिकामालाधारिणं सुरगकोपीनं चंद्रमौलिनं दक्षिणहस्तैः शूलव्यालखड्गडुडुभीन् दधानं वामहस्तैः
कपालघंटाचर्मचापान् दधानं भीमं दिग्वाससमसितद्युतिं क्षेत्रपालमावा० ॥ तद्दक्षिणतो व्याहृत्यनंतरं ॥ काणाशिशुरित्यस्य त्रितो वायुरु-
ष्णिक् ॥ इमं मंत्रमुक्त्वा ॥ धावद्धरिणपृष्ठगतं ध्वजवरदानधारिणं धूम्रवर्णं वायुमा० ४ तद्दक्षिणतो व्याहृत्यनंतरं ॥ आदित्प्रत्नस्येत्यस्य व
त्सोंतरिक्षं गायत्री ॥ इमं मंत्रमुक्त्वा ॥ नीलोत्पलाभं नीलांबरधारिणं चंद्रार्कोपेतं द्विभुजं षंढमाकाशमा० तद्दक्षिणतो व्याहृत्यनंतरं ॥ अश्विना
वर्तिरस्मदित्यस्य राहूगणोऽश्विनावुष्णिक् ॥ इमं मंत्रमुच्चार्य ॥ मध्ये कृष्णो पृष्ठे पुस्तकोपेतदक्षिणवामहस्तावन्योन्यसंयुक्तदेहावेकस्य द-
क्षिणपार्श्वे परस्य वामपार्श्वे रत्नभांडकरं शुक्लांबरधारिनारीयुग्मोपेतौ देवभिषजावश्विनावावाहयामि ॥ ॥ अथ क्रतुसंरक्षकदेव-

तावाहनं ॥ पूर्ववत्तंदुलपीठेषुकुर्यात् ॥ तच्चेत्थं ॥ तत्रप्राग्दलाग्रेपूर्ववद्व्याहृतीरुक्त्वा ॥ इंद्रंवइत्यस्यमधुच्छंदाइंद्रोगायत्री ॥ इमंमंत्रमुक्त्वा ॥ स्वर्णव
र्णंसहस्राक्षंवज्रपाणिंशचीपतिमिंद्रमावा॰ ॥ आग्नेयदलेव्याहृत्यनंतर ॥ अग्निमीळ इत्यस्यमधुच्छंदाअग्निर्गायत्री ॥ इममंत्रमुक्त्वा
स्वर्णवर्णंसप्तार्चिषंसप्तहस्त शक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणिदधानंस्वाहाप्रियंमेषवाहनं अग्निमावा॰ ॥ याम्यदलाग्रेव्याहृतीरु
क्त्वा ॥ यमायसोममित्यस्ययमोयमोनुष्टुप् ॥ इमंमंत्रमुक्त्वा ॥ रक्तवर्णंदंड धरंमहिषवाहनंइळाप्रियंयममावा॰ ॥ नैर्ऋत्यदलाग्रे ॥ व्याहृत्य
नंतरं मोषुणइत्यस्यघोरःकण्वोनिर्ऋतिर्गायत्री ॥ इममंत्रमुक्त्वा ॥ नीलवर्णंखड्गचर्मधरमूर्ध्वकेशंनरवाहनंकालिकाप्रियंनिर्ऋतिमावा॰ ॥ प
श्चिमदलाग्रेव्याहृत्यनंतरं ॥ उदुत्तमंमुमुग्धिनइत्यस्यशुनःशेपोवरुणोगायत्री ॥ इमंमंत्रमुक्त्वा ॥ रक्तभूषणंनागपाशधरंमकरवाहनंपद्मिनी
पतिंवरुणमा॰ ॥ वायव्यदलाग्रेव्याहृत्यनंतरं ॥ तववायोइत्यस्यांगिरसोव्यश्वोवायुर्गायत्री ॥ इमंमंत्रमुक्त्वा ॥ श्यामवर्णंहेमदंडधरंकृष्णमृग-
वाहनंजगत्प्राणरूपंमोहिनीप्रियंवायुमावा॰ ॥ उत्तरदलाग्रेव्याहृत्यनंतरं ॥ त्वन्नःसोमइत्यस्यगौतमःसोमोगायत्री ॥ इमंमंत्रमु॰ ॥ स्वर्णव
र्णंनिधीश्वरंकुंतपाणिमश्ववाहनंचित्रिणीप्रियंकुबेरमावा॰ ॥ ऐशान्यदलाग्रेव्याहृत्यनंतरं ॥ कद्रुद्रायेत्यस्यकाण्वोरुद्रोगायत्री ॥ इमंमंत्रमु
क्त्वा ॥ शुद्धस्फटिकवर्णंवरदाभयशूलाक्षसूत्रधरंवृषभवाहनंगौरीप्रियमीशानमावा॰ ॥ एवमेकचत्वारिंशद्देवताआवाह्यकलशेचवरुणंपू-
र्वोक्तवदावाह्यनमोंतैश्चतुर्थ्यंतैःस्वस्वनामभिःक्रमेणपूर्वोक्तद्रव्यैःपुष्पसमर्पणपर्यंतांग्रहदेवतापूजांकृत्वाकर्मसाद्गुण्यदेवताःक्रतुसंरक्ष

१ वेद्यु॥अ ररद धेनेन

कदेवता वरुणं च मलयजगंधपत्रपुष्पैरुत्थैवपूर्जं द्विहोमः॥ ॥ सच समिच्चर्वाज्यैः प्रतिद्रव्यं प्रतिग्रहं एकाष्टवराभिः सहस्रपराभिराहु-
तिभिर्निमित्तशास्त्रानुसारेण प्रधानदेवतां त्रोनपार्श्वदेवतानां तेषां विंशांशेन स्वाहांतैर्नामभिस्तत्तन्मंत्रैर्वा पाणिनैव सकृद्दवदानेन चरुहोमः॥ ततः आचा-
र्यः प्रत्यगग्नेरासीनः प्राणानायम्य पूर्ववत्संकल्प्याग्निमुखं वक्ष्यमाणप्रकारेण प्रागुक्तलक्षणे कुंडे स्थंडिले वोपलेपाद्यग्नि प्रतिष्ठांतं कृत्वा कृत्विग-
न्वारब्धः समिद्वयमादाय देशकालौ निर्दिश्याद्य वक्ष्यमाणग्रहदेवतापरिग्रहार्थमन्वाधानं करिष्ये॥ अस्मिन्नन्वाहिते ग्रावि ग्रहादिचक्षुषी आज्येने-
त्यंतमुक्त्वा प्रधानदेवतामादित्यमधिदेवतां अग्निं प्रत्यधिदेवरुद्रमर्कसमिच्चर्वाज्यैः प्रधानदेवं सोममधिदेवतामपः प्रत्यधिदेवतां गौरीं पालाशस-
मिच्चर्वाज्यैः प्रधानदेवतामंगारकमधिदेवतां भूमिं प्रत्यधिदेवतां स्कंदं खदिरसमिच्चर्वाज्यैः प्रधानदेवं बुधं अधिदेवं विष्णुं प्रत्यधिदेवं पुरुषं अपा-
मार्गसमिच्चर्वाज्यैः प्रधानदेवं [illegible] अधिदेवं [illegible] प्रत्यधिदेवं ब्रह्माणं अश्वत्थसमिच्चर्वाज्यैः प्रधानदेवं शुक्रं अधिदेवमिंद्राणीं प्रत्यधिदेवमिंद्रं
औदुंबरसमिच्चर्वाज्यैः प्रधानदेवं शनिमधिदेवं प्रजापतिं प्रत्यधिदेवं यमं शमीसमिच्चर्वाज्यैः प्रधानदेवं राहुं अधिदेवं सर्पं प्रत्यधिदेवं कालं दूर्वा-
चर्वाज्यैः प्रधानदेवं केतुं अधिदेवं ब्रह्माणं प्रत्यधिदेवं चित्रगुप्तं कुशचर्वाज्यैः विवक्षितसंख्याकैः पार्श्वदेवताः प्रधानदशांशेन कर्मसाद्गुण्यदेवता-
विनायकं दुर्गां क्षेत्रपालं वायुमाकाशमश्विनौ क्रतुसंरक्षकदेवताः इंद्रमग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरमीशानं प्रधानविंशांशेन अग्निं वायुं सूर्यं प्र-
जापतिं प्रभूततिलव्रीहिभिर्विवक्षितसंख्यया सूर्यमाज्येन त्रयोदशवारं अग्निं चतुस्त्रिंशद्वारं रुद्रं द्वात्रिंशद्वारं शेषेणास्विष्टकृतमित्याद्दस्य धो-

बृहस्पतिं
इन्द्रं

 

यस्य इत्यंतमुक्त्वा भूर्भुवः स्वाहेत्यग्नावाधाय प्रजापतय इदं न ममेत्युद्देशत्यागौ कुर्यात् ॥ ततो बर्हिः सन्नहनाद्याज्ये दर्भाग्रद्वयप्रक्षेपांतं कृत्वा लौकि
कसिद्धान्नतिलव्रीहिभिः सहाज्यं त्रिः पर्यग्नि कृत्वाज्यमुस्य बर्हिः पिनिधाय स्रुवस्रुक्संमार्जनं कृत्वा अन्नपात्रांतरे पृथक् कृत्वा ग्रावर्धिथ्यिस्य स्रुवेणा
भिघार्योदगुद्वास्याज्याद्दक्षिणतो बर्हिष्यासाद्य प्रत्यभिघार्यालंकरणं ॥ आज्यभागांतं कृत्वा क्रमेणादित्यादीशानांतेभ्यः एकचत्वारिंशद्देवेभ्य आ
ज्येनोक्तैस्तत्तन्मंत्रैः समिच्चर्वाज्यैः प्रागुक्तसंख्याका आहुतीर्जुहुयात् ॥ तत्रायं प्रकारः ॥ समिधं मूलतो द्व्यंगुलं विहाय मध्यमानामिकांगुष्ठैर्गृ
हीत्वा जुहुयात् ॥ चरुं ग्राससमं पाणिनैवाज्यं स्रुवेणैव तदभावे स्वस्य पर्णेन ॥ ततो व्यस्तसमस्तव्याहृतिभिः प्रभूततिलव्रीहीन् पाणिना हुत्वा ॥
सूर्यपावकरुद्रानाज्येन जुहुयान्मंत्रैः ॥ ते च मंत्राः ॥ सूर्यो न इति पंचर्चस्य सूक्तस्य ॥ सूर्यपुत्रश्चक्षुः सूर्यो गायत्री ॥ उदुत्यमिति मंत्रस्य ॥ का
ण्वः प्रस्कण्वः सूर्यो गायत्री ॥ नमो मित्रस्येति मंत्रस्य ॥ सूर्यपुत्रोभितपाः सूर्यो जगती ॥ चित्रं देवानामिति मंत्रस्यांगिरसः कुत्सः सूर्यस्त्रिष्टुप् ॥
उदु त्ये सू भग इति पंचर्चस्य मैत्रावरुणो वसिष्ठः सूर्यस्त्रिष्टुप् ॥ त्वमग्ने प्रथम इत्यष्टादशर्चस्य सूक्तस्यांगिरसो हिरण्यस्तूपोऽग्निर्जगती
अंत्याष्टमीषोडश्यौ त्रिष्टुभः ॥ त्वमग्ने द्युभिरित्येषोडशर्चस्य सूक्तस्य गृत्समदोऽग्निर्जगती ॥ कद्रुद्रायेति षडृचस्य सूक्तस्य घोरः कण्वो
रुद्रो गायत्री ॥ तृतीया मैत्रावरुणी ॥ इमा रुद्रायेत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगती ॥ अंत्ये त्रिष्टुभौ ॥ आ ते पितर्मरुतामिति पं
चदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् ॥ एतैरेकोनाशीति मंत्रैः प्रतिमंत्रं स्वाहांतैः आज्यं हुत्वा घंटादिवादित्रशब्दैः वेदमारभेतकचत्वा

रिंशद्देवताभ्यो वरुणाय च धूपदीपनैवेद्यतांबूलादीनुसमर्प्य ॥ प्रसीदंतु भवंत इति तान् संप्रार्थ्य ऋत्विगन्वारब्धः स्वकृतिलव्रीहिशेषणास्विष्टकृतं हु-
त्वा इध्मसन्नहनीमग्नौ प्रास्य प्रायश्चित्तादिहोमशेषं समाप्य यजमानान्वारब्धः आचार्यः पूर्णाहुतिं स्थालीपाके वक्ष्यमाणप्रकारेण हुत्वा विश्वेभ्यो
देवेभ्यः संस्रावं हुत्वा पूर्णपात्रं निनूयनोपस्थान परिस्तरणविसर्जन परिसमूहन पर्युक्षणाभ्यर्चन पात्रोत्सर्जनादि कुर्यात् ॥ अथ मंडपईशाने प-
चरंगैः स्वस्तिकं कृत्वा चतुष्पाद दीर्घं चतुरस्रं सोत्तरच्छदं तत्र पीठं निधाय तत्रोदगग्रान् समूलान् हरितदर्भानास्तीर्य तत्र सामात्यं यजमानं प्राङ्मु-
खमुपवेश्याचार्य ऋत्विग्भिः सह मंगलवाद्यैरभिषेककुंभोदकं पात्रांतरे आदाय प्रत्यङ्मुखस्तिष्ठन् सपलाशयोदुंबर्या दूर्वाशाखया सहिरण्यपवि-
त्रया सकुशदूर्वापल्लवया हस्तमंतर्धायोदकस्पर्षद्भिरब्लिंगाभिर्वारुणीभिः पावमानीरन्याभिश्च शांतिपवित्रलिंगाभिर्महाभिषेकमंत्रैः सुरास्त्वा-
मिति सूक्तेनेमा आपः शिवतमा इति तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरिति च व्याहृतिभिरभिषिंचेत् ॥ ते च मंत्राः ॥ आपो हि ष्ठेति नवर्चस्य
सूक्तस्याम्बरीषः सिंधुद्वीप आपो गायत्री ॥ पंचमी वर्धमाना ॥ सप्तमी प्रतिष्ठा ॥ अंत्ये द्वे अनुष्टुभौ ॥ प्रसम्राज इत्यष्टर्चस्य सूक्तस्यात्रिर्वरुणस्त्रि-
ष्टुप् ॥ स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छंदाः पवमानसोमो गायत्री ॥ इमं न इंद्राग्नीति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् ॥ प-
वित्रं ते विततमिति पंचर्चस्यांगिरसः पवमानसोमो गायत्री ॥ अथ ग्रहमंत्राः ॥ ग्रहाणामादिरादित्यो लोकरक्षणकारकः ॥ विषमस्थान
संभूतां पीडां हरतु ते रविः ॥ १ ॥ रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ॥ विषमस्थानसंभूतां पीडां हरतु ते विधुः ॥ २ ॥ भूमिपुत्रो महाते-

जाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः॥ ३॥ उत्पातरूपोजगतांचंद्रपुत्रोमहाद्युतिः॥ सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः ४
देवमंत्रीविशालाक्षःसदालोकहितेरतः॥ अनेकशिष्य संपूर्णःपीडांहरतुतेगुरुः॥ ५ ॥ दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहामतिः॥ प्रभुस्तारा-
ग्रहाणांचपीडांहरतुतेभृगुः॥ ६॥ सूर्यपुत्रोदीर्घदेहोविशालाक्षःशिवप्रियः॥ मंदचारःप्रसन्नात्मापीडांहरतुतेशनिः॥ ७॥ महाशिरामहावक्त्रो
दीर्घदंष्ट्रोमहाबलः॥ अतनुश्चोर्ध्वकेशश्चपीडांहरतुतेतमः॥ ८ ॥ अनेकरूपवर्णैश्चशतशोथसहस्रशः॥ उत्पातरूपोजगतःपीडांहरतुतेशिखी ॥९॥ ॥ अथदेवमंत्राः॥ ॥ सुरास्त्वामभिषिंचंतुब्रह्माविष्णुमहेश्वरः॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः॥ १॥ प्रद्युम्नश्चानिरुद्ध
श्चभवंतुविजयायते॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः॥ ब्रह्मणासहिताःसर्वेदिक्पा-
लाःपांतुतेसदा ॥ २॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः॥ बुद्धिर्लज्जावपुःशांतिःतुष्टिःकांतिश्चमातरः॥ ४॥ एतास्त्वामभिषिंचं
तुदेवपत्न्यःसमागताः॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः॥५॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः॥ देवदानवगंधर्वायक्ष
राक्षसपन्नगाः॥ ६॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः॥७॥ अस्त्राणिसर्वशस्त्राणिराजानो
वाहनानिच॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ८॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः॥ एतेत्वामभिषिंचंतुसर्वकामार्थ
सिद्धये॥९॥ एतैर्मंत्रैःप्रतिमंत्रमभिषिच्यश्रीसूक्तेनहिरण्यवर्णांहरिणीमित्यादिनाइमाआपःशिवतमाइतितृचेनदेवस्यत्वेतियजुषा-

भूर्भुवःस्वरितिव्याहृतिभिश्चाभिषिंचेत् ॥ एवमभिषिक्तोयजमानःश्वेताहतवस्त्रयुग्मंगंधमाल्याभरणंचबिभृयात् ॥ ततआचार्योदिक्षुविदि-
क्षुचबलिमुत्क्षिप्यसुवासिनीभिर्नीराजनंकारयेत् ॥ अथयजमानोग्रहदेवताश्चतुर्थ्यंतदेवतानामभिःपुष्पाणिसमर्प्याचार्येणव्याहृत्युच्चा-
रणपूर्वकंग्रहोद्वासनंकारयित्वाआचार्यप्रभृतिभ्यःजपहोमफलंगृहीत्वातेभ्योदक्षिणांदद्यात् ॥ गौःशंखःरक्तोनड्वान्हिरण्यंपीनवासःश्वे-
ताश्वःकृष्णागौःकालायसंह स्तीछागोवेतिग्रहक्रमेण ॥ अत्रन्यूनदक्षिणावुधदक्षिणयाहिरण्येनसमाकार्याआद्यगवावाएतदभावेसर्वे-
भ्योयथाशक्तिहिरण्यंवादद्यात् ॥ आचार्यायद्विगुणं ॥ अन्येभ्यश्चयथाशक्तिभूयसीं ॥ ततःकांस्यपात्रगताज्ये ॥ रूपंरूपंप्रतिरूपोबभूवेतिमंत्रे-
णसकुटुंबःस्वप्रतिरूपंप्रेक्ष्य ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताइतिमंत्रंपठित्वातदाज्यं
सदक्षिणंब्राह्मणायदद्यात् ॥ ततोभूरिदक्षिणांदत्वासंकल्प्यवा ॥ एकस्यआहुतेरेकंशतस्यैकंसहस्रस्यवाएकंयथाशक्तिवाब्राह्मणान्भो-
जयित्वातेभ्यःशांतिःपुष्टिस्तुष्टिश्चास्त्विस्याद्याशिषोगृहीत्वातान्संप्रार्थ्यप्रणिपत्य ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपू-
र्णतांयातिसद्योवंदेतमच्युत मितिपठित्वा ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिरित्युक्त्वान्यू-
नातिरिक्तच्छिद्रत्वार्थंयथाशक्तिअच्युतानंतगोविंदेतिनाममंत्रजपंकृत्वाग्रहयज्ञफलंश्रीविष्णवेसमर्प्यस्वयंहृष्टमनाबंधुभिःसहभुंजीत ॥
अयंचाश्वलायनगृह्यपरिशिष्टोक्तोग्रहमखः ॥ स्मार्ताग्निमतामाश्वलायनानामेव ॥ बह्वृचस्वशाखगृह्योक्तंयस्यकर्मप्रचोदितं ॥ तस्यतावतिशा- ॥

प्र॰र
१९

स्यार्थे कृते सर्वैः कृतो भवेदिति वचनात् ॥ एवमन्येषामपि यदि स्वगृह्याद्युक्तः तदा स एव ॥ येषां तु स्वगृह्यादौ नोक्तस्तैर्याज्ञवल्क्यादिस्मृत्युक्तः ॥ म
त्स्यपुराणाद्युक्तो वानुष्ठेयः स्मृत्यादेः साधारण्यादिति दिक् ॥ ॥ इति श्रीमद्विद्वन्मुकुटमाणिक्यश्रीरामेश्वरभट्टसूरिसूनुना॰ प्रयो॰ नवग्र
हमखप्रयोगः ॥ ॥ अथ विवाहोत्तरकर्तव्योऽपि स्थालीपाकः प्रथममुच्यते ॥ तत्रांगानामुक्तानामन्यत्रातिदेशेन प्राप्तेः ॥ स च विवाहानंतरं कर्त
व्यगृहप्रवेशनीयहोमोत्तरभाविन्यां पौर्णमास्यामारंभणीयः न त्वमावास्यायां ॥ चतुर्थीहोमात् प्रागपि पौर्णमासी चेत्तत्रारंभः ॥ यदि चारंभकाले म
लमासगुरुशुक्रास्तबाल्यवार्धकग्रहणपौषमासादि भवति तदापि प्रारंभः कार्यः ॥ यानि तु तत्रारंभनिषेधकानि ॥ उपरागोधिमासश्च यदि प्रथम
पर्वणि ॥ तथा मलिम्लुचे पौषे नान्वारंभणमिष्यते ॥ गुरुभार्गवयोर्मौढ्ये चंद्रसूर्यग्रहे तथेत्यादीनि संग्रहकारादिवचनानि तानि आलस्यादिनास्व-
कालानुपक्रांतस्थालीपाकादिप्रारंभविषयाणीति प्रयोगपारिजातकारः ॥ तथा चापरार्कस्थं गर्गवचनमुदाजहार ॥ नामकर्म च दर्शेष्टिं यथा
कालं समाचरेत् ॥ अतिपाते सति तयोः प्रशस्ते मासि पुण्यभ इति ॥ ॥ इति स्थालीपाकप्रारंभकालः ॥ ॥ अथ पर्वनिर्णयः ॥ ॥ पूर्णि
मा दर्शश्च पर्व ॥ तत्रान्वाधानं प्रतिपदीष्टिरित्युत्सर्गः ॥ तत्र पर्वचतुर्थांशः प्रतिपदश्चाद्यास्त्रयोंशाः सूर्योदयोत्तरमुहूर्तत्रये विद्यमानो याग
कालः ॥ सूर्यास्तमानपर्यंतं यत्र पर्वाखंडं तत्र न संदेहः ॥ यदि तु खंडपर्व तत्रायं निर्णयः ॥ अन्हो मध्ये ततः पूर्वं वा पर्वप्रतिपदोः संधौ तदहर्यागः
पूर्वेद्युरन्वाधानं ॥ मध्यान्हात्तु परे संधौ तदहरन्वाधानं परेद्युर्याग इति ॥ संधिश्च प्रतिपदो न्हासवृद्ध्योरर्धं पर्वणि प्रक्षिप्य ज्ञेयः ॥ इष्टेः पर्वणि

समामो पुनरिष्टेः कर्तव्यतापत्तेः सांप्रतिपद्येव समापनीया न पर्वमध्ये ॥ अपराण्हसंधौ परेद्युः प्रतिपच्च तुर्यांशोपि यागेन दोषः ॥ चंद्रदर्शनदिने इष्टिनि
षेधवचनानि तन्निर्णायकानि संभवे योज्यानि ॥ या तु पौर्णमासी संगवादूर्ध्वमावर्तनात्पूर्वं संधिमती सा सद्यस्कालेति तस्यामेवान्वाधानं यागश्च ॥
अथ विकृतौ निर्णयः ॥ ॥ आवर्तनेन ततः पूर्वं वा पर्वसंधौ तदहरादौ प्रकृतियागं कृत्वा पश्चादाग्रयणादिविकृतिः कार्या ॥ परसंधौ तु विकृतियाग एव सं
धिदिने प्रकृतिस्तु तदुत्तरदिन इति ॥ ॥ अथ स्थंडिलकरणादिनिर्णयः ॥ तत्र चौलादिहोमो लौकिकाग्नौ ॥ पार्वणस्थालीपाकश्रवणाकर्मादिहोमो गृह्या
ग्नौ ॥ तत्र लौकिकाग्नौ होमे स्थंडिलकरणादि अग्निप्रतिष्ठापनांतो विधिर्नियतः ॥ गृह्याग्निहोमेपि गृहप्रवेशवास्तुहोमशूलगवान्वष्टक्यादिषु नियतः ॥ धा
र्यो यत्नेन तदसंभवात् ॥ यदापि स्मार्ताग्निदादावग्निसमारोपः तदा गृह्याग्निकर्तव्येपि स्थालीपाकादौ नियतः ॥ एतत्सर्वमभिप्रेत्य ॥ यत्र क्वच होष्यन्स्यादिति प्र
योक्ताग्निप्रतिष्ठापनविधेर्विषयं प्रदर्शयितुमाह कारिकाकारः ॥ प्रतिष्ठाप्याथ लेखास्कृ होमायालं हविर्भुजं ॥ एतदंतं प्रकुर्वीत होष्यन्संस्थापितेनल ॥
इति ॥ अन्यथाऽसंस्थापितेनले होष्यन्निति व्यर्थं स्यात् ॥ एवं स्थंडिलकरणादिविषयं निर्णीय स्थंडिलादि कुर्यात् ॥ तत्र यजमानः कृतनित्यक्रियः शुचिः
परिहितधौतवासा दर्भपाणिः पीठोपविष्टः प्राङ्मुखो वाग्यतो द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपर ० र्थममुककर्मक ० ॥ तदंगहोमं कर्तुं स्थंडि
लादि करि ० इति संक ० गोमयादिलिप्ते शुद्धे देशे शुद्धमृदा ईशान्यारंभमुदक्संस्थं चतुरंगुलोन्नतमंगुलोन्नतं वा चतुर्दिक्षु भित्तिलिखादिसमसत्यंगुलपरिधिकं
फलितमष्टादशांगुलविस्तृतं होमानुसारेण तदधिकं वा न तु ततो न्यूनं मध्योन्नतं स्थंडिलं कुर्यात् ॥ तन्होमयेन प्रदक्षिणमुपलिप्य दक्षिणे सो[illegible] ःउ

प्र०र०
२०

वा

दीच्यां द्वे प्राच्यामर्धमित्यंगुलानित्यक्त्वा दक्षिणोपक्रमामुदक्संस्थां प्रादेशमात्रामेकां लेखां लिखित्वा तस्या दक्षिणोत्तरयोः प्रागायते पूर्वरेखया असंस्पृष्टे प्रादेशसंमि-
ते द्वे लेखे लिखित्वा तयोर्मध्ये परस्परमसंस्पृष्टा उदक्संस्थाः प्रागायताः प्रादेशसंमितास्तिस्र इति षड्लेखा यज्ञियशकलमूलेन दक्षिणहस्तेनोल्लिख्य
लेखासु तच्छकलमुदगग्रं निधाय स्थंडिलमद्भिरभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणिं प्रक्षाल्य वाग्यतो भवेत् ॥ ततस्तैजसेनासंभवे मृन्मयेन वा पात्र-
युग्मेन संपुटीकृत्य सुवासिन्या श्रोत्रियागाराद्वा स्वगृहाद्वा समृद्धं निर्धूममग्निमाहृत्य स्थंडिलादाग्नेय्यां निधाय ॥ जुष्टो दमूना आत्रेयो वसुश्रुतोऽग्निस्त्रि-
ष्टुप् ॥ एह्यग्ने राहूगणो गोतमोऽग्निस्त्रिष्टुप् ॥ अग्न्यावाहने वि० ॥ ॐ जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ॥ विश्वा अग्ने अ-
भियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ॥ अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौम-
नसाय देवान् ॥ इत्यक्षतैरावाह्य आच्छादनं दूरीकृत्य ॥ समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती ॥ अग्निप्रतिष्ठापने वि० ॥ ॐ भूर्भु-
वः स्वरित्यात्माभिमुखं पाणिभ्यां षट्लेखासु तत्तत्कर्मसु विहितनामकममुकनामकमग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य ॥ प्रोक्षितेंधनानि नि-
क्षिप्य वेणुधमन्या प्रबोध्य ध्यायेद्देवं ॥ चत्वारि शृंगा गोतमो वामदेवोऽग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्याने वि० ॥ ॐ चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥ स्मृतिमंत्राश्च ॥ सप्तहस्तश्चतुःशृंगः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मि-
तः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ॥ बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवं ॥ तोमरं व्यजनं वामे घृतपात्रं च धारयन् ॥ आत्माभिमुखमासीन-

एवंरूपोहुताशनइति ॥ ततोयदिसमिदादौसमारोपितोग्निस्तर्हिप्रत्यवरोहणंकार्यं ॥ तच्चैवं ॥ प्रत्यवरोहेत्यस्यहिरण्यगर्भोग्निस्त्रिष्टुप् ॥ अग्नि
प्रत्यवरोहणेविनि० ॥ ॐ प्रत्यवरोहजातवेदः पुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः इतिमंत्रे
णसमारोपिताग्निसमिधंस्थापितेग्नौप्रक्षिपेदिति ॥ एतदंतंसंस्थापितेग्नौहोमेकार्यं ॥ नित्यधारितहोमेतुनैतावत् ॥ ततःपार्वणस्थालीपाकेप्रधानदिनात्
पूर्वदिनेसद्यस्कालायांपौर्णमास्यामशक्तौवाप्रधानदिनएवप्रातरौपासनंहुत्वान्वाधानंकुर्यात् ॥ तच्चेत्थं ॥ आचम्यप्राणानायम्यसमिद्धूवेत्रयंवादाय देश-
कालौसंस्मृत्वाममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंदर्शपूर्णमासाभ्यांस्थालीपाकाभ्यांयक्ष्ये ॥ तत्रेदानींपौर्णमासेनस्थालीपाकेनयक्ष्ये ॥ दर्शेतुपू
र्वसंकल्पितेनदर्शस्थालीपाकेनयक्ष्यइतिविशेषः ॥ तत्रदेवतापरिग्रहार्थमन्वाधानंकरिष्येइतिसंकल्प्यास्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेन
प्रजापतिंप्रजापतिंचाघारदेवतेआज्येनअग्नीषोमौचक्षुषीआज्येनअग्निमग्नीषोमौचप्रधानदेवतेचरुद्रव्येण ॥ दर्शेतुअग्निमिंद्राग्नीचप्रधानदेवतेचरु
द्रव्येणेतिविशेषः ॥ शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रमयसममिंदेवान्विष्णुअग्निंवायुंसूर्यंप्रजापतिंचैताःप्रायश्चित्तदेवताआज्येनज्ञाताज्ञा-
तदोषनिबर्हणार्थंत्रिवारमग्निंमरुतश्चाज्येनविश्वान्देवान्संस्रावेणयक्ष्ये ॥ अंगदेवताःप्रधानदेवताःसर्वाःसन्निहिताःसंतु ॥ एवंसांगोपांगेनकर्म
णाग्नेयक्ष्ये ॥ सद्यस्कालेतुसद्योयक्ष्यइतिसंकल्प्यतूष्णींसमस्तव्याहृतिभिर्वासमिद्धोमंकुर्यात् ॥ व्याहृतिपक्षेव्याहृतीनामित्यादिपूर्ववत् ॥
अन्वाधानसमिद्धोमेविनियोगः ॥ ॐ भूर्भुवःस्वःस्वाहेतिप्रजापतयइदंनममेतित्यागः ॥ तंचाग्निंधारयेत् ॥ संकटेतुतुभ्यंताइत्यृचाज्याहुतिंहु

न २

प्र·ग·र·
२१

त्वासमारोपयेत् ॥ तद्यथा ॥ तुभ्यंताविरूपोग्निर्गायत्री ॥ कृतान्वाधानाग्नेः समारोपाधिकारार्थंप्रायश्चित्ताज्यहोमे विनियोगः ॥ ॐ तुभ्यंता अंगिरस्त-
मविश्वाः सुक्षितयः पृथक् ॥ अग्नेकामाय येमिरेस्वाहा ॥ अग्नयइदं ॥ ततस्त्रिभिस्त्रिभिः कुशदलैः सव्यंपाणिमधोदक्षिणंचोपरिकुर्वन् पूर्वदलाग्रै
रुत्तरदलमूलैश्चत्रिसंधिंद्विगुणांरज्जुंकृत्वापुनर्दक्षिणमधःसव्यंचोपरिकुर्वन् ॥ तथैवत्रिगुणयेत् ॥ अंतेप्रदक्षिणंग्रंथिंदद्यात् ॥ एवंषट्त्रिंशद्द
र्भदलैरेकारज्जुर्भवति ॥ ततस्तस्यामुदगग्रायांप्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय ॥ तयाबर्हिर्बर्हिरावेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यतद
ग्रशेषंपूर्ववेष्टितरज्ज्वाधस्तान्निनीयपरिस्तरणार्थदर्भैः सहाग्न्यायतनात्पश्चाद्भागोपरिनिदध्यात् ॥ ततोन्ययानाद्दशैववकृतयारज्ज्वाउदगग्रयापालाशं
खादिरमसंभवेशमीवटादियज्ञियवृक्षमयमरत्निमात्रंवितस्तिमात्रंवापंचदशदारुकमिध्मंप्रागग्रंसकृदावेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यपूर्ववन्नि
दध्यात् ॥ अत्रेध्माबर्हिषोर्बंधनेकेचिन्मंत्रानिच्छंति ॥ तत्रबर्हिषि ॥ इंद्राण्ये संनहनं ॥ पूषाते ग्रंथिंग्रथ्नातु ॥ सतेमास्थादितिइध्मे ॥ यत्कृष्णोरूपंकृ
त्वाप्राविशस्त्वंवनस्पतीन् ॥ ततस्त्वांपंचदशधासंभरामिसुसंभृताइति एकविंशतिधेत्यत्र पंचदशधेत्यूहेन ॥ अन्येत्वनूहमाहुः ॥ अपरेतुमंत्रान्नेच्छंति ।
ततः पत्नी अग्न्यायतनालंकरणंकुर्यात् ॥ ततोगंधादिभिः स्वशरीरे अलंकृत्यतद्दिनेकलहक्रयविक्रयप्रहासानृतबहुभाषणचौर्यादिव्यसनपर्यंकश-
यनदंतधावनकरंभकुलित्थकोद्रवचणकमसूरवृंताकक्षारलवणकोरदूषकमधुमाषमांसमद्यपरान्नोपवासतैलमैथुनानिवर्जयंतौ दधिघृत
पयोमिश्रंहविष्यान्नंदिवैवसकृद्भुंजीयातां ॥ श्राद्धकर्ताश्राद्धशेषंमाषाद्यन्नंभुंजीत ॥ व्रतलोपेप्राप्तेः सहस्रंवेशनेवाउपोष्यत्वमग्नेव्रतपाइत्यृ

अ

स्था·
२१

व्रतपेग्नय

परि

चाज्याहुतिंजुहुयात् ॥ त्वमग्नइत्यस्यवत्सोऽग्निर्गायत्री ॥ व्रतलोपजनितदोषहारार्थमाज्यहोमेविनियोगः ॥ ॐ त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा।
त्वं यज्ञेष्वीड्यः स्वाहा ॥ व्रतपाग्नयइदं ॥ यद्वा ॥ निर्वापादिपूर्वकंव्रतपायाग्नयेपार्वणस्थालीपाकेनसमानतंत्रंचरुंप्रधानात्पूर्वंजुहुयात् ॥ ततःप्रतिप
दिप्रातरौपासनंहुत्वाग्निंपरिसमुह्यपरिस्तृणीयात् ॥ तच्चेत्थं ॥ अग्न्यायतनादष्टांगुलपरिमितेदेशेऐशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदके
नपाणिनात्रिःपरिमृज्यपूर्वमुपरिनिहितदर्भैर्दशांगुलमितेदेशेप्राच्यादिषुपरिस्तृणीयात् ॥ तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः ॥ अवाच्यामुदी-
च्यांचप्रागग्राः ॥ पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणंउत्तरपरिस्तरणंतुतद्द्वयोरधस्तात् ॥ तेचदर्भाअनियतसंख्याएके
कस्यांदिशिचत्वारश्चत्वारइत्येवंषोडशवा ॥ ततोऽग्नेर्दक्षिणतोब्रह्मासनार्थंउत्तरतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भानास्तृणीयात् ॥ अ
ग्नेरीशानतस्त्रिरंभसापरिषिच्यउत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेण ॥ चरुस्थालीप्रोक्षण्योदर्वीस्रुवौप्रणीता[illegible]ज्यपात्रेइध्माबर्हि
षीशूर्पंकृष्णाजिनेउलूखलमुसलेचेतिद्वेद्वेउदगपवर्गंप्राक्संस्थंवन्युब्जान्यासादयेत् ॥ आज्यमात्रहोमेतुप्रोक्षणीस्रुवौप्रणीता[illegible]ज्यपात्रे-
इध्माबर्हिषीचेत्येतावतामेवासादनं ॥ ततःप्रोक्षणीपात्रमुत्तानंकृत्वातत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधायशु
द्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पाक्षतादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यांउदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूयपात्राण्युत्ता-
नानिकृत्वाइध्मंचविस्रस्यसर्वाण्यपिपात्राणित्रिःप्रोक्षयेत् ॥ ताआपःकिंचित्कमंडलौक्षिपेदित्येके ॥ ततोयथोक्तलक्षणमीशानदिगव-

स्थितं ब्रह्माणमस्मिन्कर्मणि ब्रह्माणं त्वामहं वृण इति ॥ तत् पाणिं पाणिना गृहीत्वा वृणुयात् ॥ ततो ब्रह्मा वृतोस्मीत्युक्त्वा प्राङ्मुखो यज्ञोपवीत्याच
म्य समस्तपाण्यंगुष्ठो भूत्वाग्रे पाग्निं परीत्य दक्षिणत उदङ्मुख स्थित्वा आसनार्थ दर्भेषु दक्षिणभागस्थमेकं दर्भमंगुष्ठानामिकाभ्यां गृहीत्वा निर
स्तः परावसुरिति नैर्ऋत्यां निरस्याप उपस्पृश्येदमहमर्वावसोः सदने सीदामीत्युक्त्वोदङ्मुख एव वामोर्ं परि दक्षिणपादं संस्थाप्योपविश्य गंधाक्ष-
तादिभिरर्चितः सन् ॥ ॐ बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीति जपित्वासीदा यज्ञ
मनाएवं वर्तेत ॥ ततो यजमानः प्रणीतापात्रमग्रेः प्रत्यङ्निधाय तत्र प्रागग्रे पवित्रे निधायोत्पूताभिरद्भिः पूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य मुखस-
ममुन्नूत्याग्नेरुत्तरतो दर्भेषु निधाय ते पवित्रे गृहीत्वान्यैर्दर्भैराच्छादयेत् ॥ ततः प्रत्यगग्नेः कुशेषु शूर्पं निधाय तत्र प्रागग्रे पवित्रे निधायाग्नये त्वा जुष्टं नि
र्वपामि ॥ इति मंत्रावृत्त्या व्रीहीणां यवानां वा चतुरश्चतुरो मुष्टीन्निरूप्याग्नीषोमाभ्यां त्वा जुष्टं निर्वपामीति तथैव निरूप्य ते पवित्रे व्रीहीणामुपरि निधायो
त्पूताभिरद्भिरग्नये त्वा जुष्टं प्रोक्षामीति निर्वापसंख्ययोत्पूताभिरद्भिः प्रोक्षेत् ॥ एवमग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति तथैव प्रोक्षेत् ॥ दर्शे तु अग्नी-
षोमस्थाने इंद्राग्निभ्यां त्वेत्यादि निर्वापे प्रोक्षणे च विशेषः ॥ एवं नाममंत्रक होमे निर्वापप्रोक्षणं च यथाप्रधान देवतं देवतानामग्रहणेन कार्यम् ॥ सम-
त्रक होमे तु श्रवपाकर्मादौ तूष्णीं चतुरश्चतुरो मुष्टीन्निर्वपेत् प्रोक्षेच्च ॥ ततः पात्राणामुत्तरतः प्राग्रीवमास्तीर्णे ऊर्ध्वलोम्नि कृष्णाजिने निहिते उ-
लूखले मुसलेन पत्न्य वहत्यत्रिः फलीकुर्यात् ॥ तांस्त्रिः प्रक्षालितान् पृथक् पात्रे एकपात्रे वा अविदग्धमनवस्त्रावितमंतरूष्मपक्वं सुशृतं

स्था॰ रू २२

२ आज्यपात्रं भुवि कर्षन्निधायोदगु[illegible]द्वास्यांगारानग्नेः प्रत्यस्याप:स्पृष्ट्वा

चरुं पचेत् ॥ ततः पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्य अग्नेरुत्तरतः स्थितांगारान् भस्मना सहाग्नेरुदक् परिस्तरणा-
द्बहिर्निरूह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वाल्यांगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनर्ज्वलतानेनैव दर्भोल्मुकेन चरु
णा सहाज्यं त्रिः पर्यग्निकृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वोत्तरस्थमेवाज्यं ॥ सवितुष्ट्वा हिरण्यस्तूपः सविता पुर उष्णिक् ॥ आज्यस्योत्पवने विनियोगः ॥ ॐ
सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति मंत्रेणैकस्रुत्योच्चारितेनैकवारं द्विस्तूष्णीं उत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्या
मंतयोरसंस्पृष्टगृहीताभ्यामुदगग्राभ्यां पवित्राभ्यां प्रागुत्पूय ते पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् । तूष्णीं स्कंदाय स्वाहेति मंत्रेणेति केचित् ॥ अथाग्नेः पश्चा
त्परिस्तरणाद्बहिरात्मनोग्रतो भूमिं प्रोक्ष्य तत्र बर्हिः सन्नहनीं रज्जुमुदगग्रां प्रसार्य तस्यां बर्हिः प्रागग्रमुदगपवर्गमविरलमास्तीर्य तस्मिन्नाज्यपात्रं निधा-
य स्रुवादि संमार्जयेत् ॥ तद्यथा ॥ दक्षिणेन हस्तेन स्रुक्स्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय स्रुवं वामहस्ते गृहीत्वा दक्षि-
णेन हस्तेन स्रुवस्य बिलं दर्भाग्रैः प्रागादि प्रागपवर्गं त्रिः संमृज्याधस्ताद्दर्भाग्रैरेवाभ्यात्मं बिलपृष्ठं त्रिः संमृज्य ततो दर्भाणां मूलैर्दंडस्याधस्ताद्बिलपृष्ठादा
रभ्य यावदुपशिष्टाद्बिलं तावत्त्रिः संमृज्याद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्या उत्तरतः स्रुगसंस्पृष्टं निधायोदकं स्पृष्ट्वा तैरेव दर्भैर्जुहूं चैवमेव संमृज्य स्रुवादु
त्तरतो निधाय दर्भानद्भिः क्षालयित्वाग्नावनुप्रहरेत् ॥ ततः शृतं चरुं स्रुवगृहीतेनाज्येनाभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येन नीत्वाज्याद्दक्षिणतो बर्हिषि सं
तरमासाद्य पुनरप्यभिघार्य नवाभिघार्य हविः स्थलंकरणाय पात्रांतरं चर्वाज्ययोर्मध्ये निधायैकादशांगुलिमिते देशे गंधाक्षतपुष्पैरग्निं समंत्रमर्चयेत् ॥

३ यस्मै त्व मित्स्य आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् आज्यप्रस्थापने वि॰

राज्ञेयो

प्र॰ र॰
२३

स्था

तत्र मंत्रौ ॥ विश्वानि न इत्यनयोर्वसुश्रुतोऽग्निस्त्रिष्टुप् ॥ अग्न्यर्चने विनियोगः ॥ ॐ विश्वानि नो दुर्गहा जातवेदः ॥ सिंधुं न नावा दुरितातिपर्षि ॥ अग्ने अत्रिवन्नमसा
गृणानः ॥ अस्माकं बोध्यविता तनूनां ॥ यस्त्वा हृदा कीरिणा मन्यमानः ॥ अमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशो अस्मासु धेहि ॥ प्रजाभिरग्ने अमृतत्वम-
श्यां ॥ ततः कृतप्रणतिसुहृदोऽग्निं प्रार्थयेत् ॥ यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं ॥ अश्विनं स पुत्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति ॥ तत आ-
त्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबंधनरज्जुमिध्मस्थाने निधाय पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेण त्रिरभिघार्य मूलमध्ययोर्मध्यभागे गृहीत्वा ॥
अयं त इति वामदेवो जातवेदा अग्निस्त्रिष्टुप् ॥ इध्महवने विनियोगः ॥ ॐ अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्म-
वर्चसेनान्नाद्येन समेधय स्वाहेतीध्ममग्नावाधाय जातवेदसेऽग्नय इदं न ममेति त्यजेत् ॥ ततः स्रुवेणाज्यमादायाग्नेरायतनस्य वायव्यकोणमारभ्याग्नेयको-
णपर्यंतं प्रजापतय इति मनसा स्मरन् ॥ स्वाहेत्युच्चार्य नैरंतर्येणाज्यधारामग्नाविध्मदारूपरि हुत्वा पुनराज्यमादायाग्नेरायतनस्य नैर्ऋत्यकोणत ईशानी-
पर्यंतं तथैव हुत्वा त्यक्त्वा च स्रुवेणाज्यमादायाग्नये स्वाहेत्यग्नेरुत्तरपार्श्वे पूर्वभागे हुत्वा पुनराज्यं सोमाय स्वाहेत्यग्निदक्षिणपार्श्वे तत्समप्रदेशे हुत्वा ॥ पूर्वनि-
हितपात्रे चरुमुद्धृत्य पृथक्कृत्य इदमग्नय इदमग्नीषोमाभ्यामिति चरुभागद्वयमुत्तरसंस्थमभिमृश्यावदानधर्मेण जुहुयात् ॥ एवं नाममंत्रकहोमे यथादे-
वतं विभक्तस्य चरोरभिमर्शः ॥ समंत्रकहोमे तु न विभागो नाभिमर्शश्च ॥ अथावदानधर्मः ॥ स्रुवेण स्रुच्याज्यमुपस्तीर्य प्रथमप्रधानदेवताचरुभागम-
ध्यादंगुष्ठपर्वमात्रं तिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शमकुर्वन्नवदाय दर्व्यां प्राप्य ततश्चरुपूर्वभागं प्रागग्राभिस्ताभिस्तथैवा-

२३

वदाय दर्व्यां मोप्य पात्रस्थं हविरभिघार्य दर्वीस्थमवत्तं चाभिघार्य विधूमज्वालाग्नौ ॥ अग्नये स्वाहेत्याज्यभागयोर्मध्यदेशे तत्प्रत्यग्देशे वा आच्छादयन्निव
दर्व्याः पार्श्वेन हुत्वा अग्नय इदं न ममेति त्यक्त्वा पुनः पूर्ववदुत्तरहविर्भागादवदाय अग्नीषोमाभ्यां स्वाहेति पूर्वाहुतेः प्राग्भागे हुत्वाग्नीषोमाभ्यामिदं न ममेति-
त्यजेत् ॥ पंचावत्ती तु दर्व्यां सुपस्तीर्य मध्यात् पूर्वार्धात् पश्चार्धाच्च त्रिर्हविषो वदायाभिघार्य जुहुयात् ॥ पंचावत्तिनस्तु ॥ जामदग्न्या वत्सविदा वार्ष्टिषेणास्त-
थैव च ॥ भार्गवाश्च्यावना और्वाः पंचावत्तिन ईरिताः ॥ दर्शे तु ॥ अग्नीषोमस्थाने इंद्राग्निभ्यां स्वाहा इंद्राग्निभ्यामिदं न ममेति विशेषः ॥ पुनर्दर्व्यां सुपस्तीर्य-
प्रथमहविर्भागस्योत्तरार्धतः पूर्वावदानतो भूयो नूर्ध्वनाभिरेवांगुलीभिरवदाय दर्व्यां मोप्य द्वितीयहविर्भागस्य तथैवावदाय ॥ पंचावत्ती तु हविर्भागद्वये-
प्युत्तरार्धात्पूर्वार्धाच्च हविर्द्विरवदाय पात्रस्थमनभिघार्यावत्तं तु द्विरभिघार्य ॥ यदस्येति हिरण्यगर्भोग्निः स्विष्टकृदिति धृतिः ॥ स्विष्टकृद्धोमे विनियोगः ॥
ॐ यदस्य कर्मणोत्यरीरिचं यद्वा न्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥ अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहु-
तीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहेति एकश्रुत्योच्चार्य अग्नावीशानदेशे जुहुयात् ॥ स्विष्टकृतेग्नय इदं न ममेति त्यागः ॥ ततो ग्नेरु-
त्तरतः स्थितामिध्मबंधनरज्जुं विस्रस्य रुद्राय स्वाहेति हुत्वा पः स्पृष्ट्वा स्रुवेण प्रायश्चित्ताज्याहुतीः सप्त जुहुयात् ॥ तत्र मंत्राः ॥ अयाश्चेति विमदो
या अग्निः पंक्तिः ॥ प्रायश्चित्ताज्यहोमे विनियोगः ॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि ॥ अयासा वयसाकृतो यासन्हव्यमू-
हिषे या नो धेहि भेषजं स्वाहेत्येकश्रुत्या जुहुयात् ॥ अयसेग्नय इदं न मम ॥१॥ अतो देवा मेधातिथिर्देवा गायत्री ॥ सर्वत्र प्राग्वत् ॥ ॐ अतो देवा अवंतु-

१ प्रायश्चित्ताज्यहोमे विनियोग इति १

प्र॰ २॰
२४

नोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिःस्वाहा ॥ देवेभ्यइदं ॥ २ ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ इदंवि
ष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरेस्वाहा ॥ विष्णवइदं ॥ व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयोग्निवायु-
सूर्यप्रजापतयोगायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि ॥ प्रायश्चित्ताज्यहोमेवि॰ ॥ ॐ भूःस्वाहा ॥ अग्नयइदं॰ ॐ भुवःस्वाहा ॥ वायवइदं॰ ॥ ॐ स्वः
स्वाहा ॥ सूर्यायेदं॰ ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइदं ॥ ७ ॥ ततोब्रह्माकर्तारंपरीस्याग्नेर्वायव्यदेशेतिष्ठन्नेताएवसमाज्याहुतीर्जुहुयात् ॥
स्यागंयजमानोनकुर्यात् ॥ ततस्तत्रस्थोब्रह्मैवमंत्रविपर्यासादिनियतनिमित्तेसति ॥ यद्वोदेवाअभिनपामरुतस्त्रिष्टुप् ॥ मंत्रविपर्यासादिनियतनैमि-
त्तिकप्रायश्चित्ताज्यहोमेवि॰ ॥ ॐ यद्वोदेवाअतिपातयानिवाचाच्प्रयुतीदेवहेळनं ॥ अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वा
हा ॥ यजमानः ॥ मरुद्भ्यइदं॰ ॥ अनाज्ञातमितिमंत्रद्वयस्यहिरण्यगर्भोग्निरनुष्टुप् ॥ मंत्रविपर्यासादि॰ ॥ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥
अग्नेतदस्यकल्पयत्वँहिवेत्थयथातथँस्वाहा ॥ यजमानः ॥ अग्नयइ॰ ॥ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वँहिवेत्थयथा-
तथँस्वाहा ॥ यजमानः ॥ अग्नयइदं॰ ॥ यत्पाकत्रेत्यास्यस्त्रितोग्निस्त्रिष्टुप् ॥ मंत्रविपर्यासादिनिमित्तकप्रा॰ ॥ ॐ यत्पाकत्रामनसादीनदक्षानय-
ज्ञस्यमन्वतेमर्त्यासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऋतुशोयजाति स्वाहा ॥ अग्नयइ॰ ॥ स्कन्नभिन्नाद्यनियतनिमित्तेसतिवक्ष्य-
माणप्रकारेणनत्तत्प्रतिपदोक्तञ्च पहोमान्कुर्याद्ब्रह्मा ॥ ब्रह्मणोभावेयजमानएवैतान्प्रायश्चित्तादीन्कृत्वाऽन्यस्मैवरंदद्यात् ॥ ततोयजमानः

स्था॰
२४

५ सग्निरा विविश्चा निरूणुतेम हित्वा॥प्रादेवी मर्याः सह नेदुरेवाः शिवी तेभ्यं गेरक्षसे विनिक्षेस्वाहे ५

सर्वकर्मग्रपूरणींभद्रद्रव्यदांपूर्णाहुतिंजुहुयात् ॥ तद्यथा ॥ स्रुवेणाज्यंगृहीत्वास्रुचंसमबिलांपूरयित्वा तस्यांस्रुवमूर्ध्वबिलंनिधायपुनरधोवि
लंनक्षिप्यस्रुवाग्रेकुस्कुसाक्षतान्निधायसव्यपाणिनास्रुक्स्रुवमूले धृत्वादक्षिणपाणिनास्रुकुस्रुवंशंखमुद्रयागृहीत्वानिष्ठन्त्समपादऋजुका
यः स्रुवाग्रन्यस्तदृष्टिःप्रसन्नात्मा ॥समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवआपस्त्रिष्टुप् ॥ अंत्याजगती ॥ पूर्णाहुतौवि० ॥ समुद्रादूर्मिरि-
त्यादिमधुमंतंतऊर्मिंस्वाहेतिपठन्युवपरिमितांधारांसंततांस्रुगग्रेणसशेषंहुत्वा ॥ अग्नयइदंनममेत्याहृदयत्यक्त्वा ॥ विज्योतिषेत्यस्यजानोवृषोग्नि-
स्त्रिष्टुप् ॥ ॐ विज्योतिषाबृहताभा[illegible]त्यनेनचतथैववशिष्टंहुत्वाअग्नयइदंनममेतित्यक्त्वा ॥ विश्वेभ्योदेवेभ्यःस्वाहेतिसंस्रावंहुत्वा ॥ विश्वेभ्योदेवे
भ्यइदं० ॥ ततस्तंडुलकणान्समिद्दर्भशाकलान्यद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ पूर्णाहुत्याद्येतदंतंससमूलंप्रयोगपारिजातकारेणालिखितमपिइदानींशिष्टा
नकुर्वंति ॥ विवाहादिक्रियायांचशालायांवास्तुपूजने ॥ नित्यहोमेवृषोत्सर्गेपूर्णाहुतिंनकारयेत् ॥ अथावभृथस्थानीयंपूर्णपात्रजलेनमार्जनंकुर्यात्
तद्यथा ॥ पूर्वासादितंपूर्णपात्रमास्तीर्णबर्हिषिदक्षिणपाणिनानिधाय तत्रगंगादिपुण्यनदीःस्मरन्दक्षिणपाणिनास्पृशन् ॥ पूर्णमसिपूर्णंमेभू
याःसुपूर्णमसिसुपूर्णंमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वंमेभूयाअक्षितिरसिमामेक्षेष्ठाइतिजपित्वाकुशाग्रैःप्रागादिपंचदिक्षुजलंमंत्रैर्य
थालिंगंसिंचेत् ॥ तेचमंत्राः ॥ प्राच्यांदिशिदेवाऋत्विजोमार्जयंतांदक्षिणस्यांदिशिमासाःपितरोमार्जयंतांप्रतीच्यांदिशिगृहाःपशवोमार्जयंतामुदी
च्यांदिश्यापओषधयोवनस्पतयोमार्जयंतामूर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतामित्येकश्रुत्यापठन्प्रतिदिशंसिक्त्वाकुशाग्रैःस्वशिर

भू-
स्तु
मि
रि
५५

स्म. २

सिमार्जयेत् ॥ तत्रमंत्राः ॥ आपोअस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् ॥ मार्जनेवि० ॐ आपोअस्मान्मातरः शुंधयंतु घृतेननोघृतप्वः पुनंतु ॥ विश्वं
हिरिप्रंप्रवहंतिदेवीरुदिदाभ्यः शुचिरापूतएमि ॥ इदमापःसिंधुद्वीपआपोनुष्टुप् ॥ मार्जनेवि० ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाह-
मभिदुद्रोहयद्वाशेपउतानृतं ॥ सुमित्र्यानआपओषधयःसंतु ॥ दुर्मित्र्यास्तस्मैसंतु इत्येतैर्मंत्रांतेमार्जनंकृत्वायोस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मि
इतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् ॥ ततोब्रह्मा यजमानवामपार्श्वस्थितपत्न्यंजलौपूर्णपात्रस्थंजलं ॥ ॐ माहंप्रजांपरासिचंयानःसयावरीस्थ
न ॥ समुद्रेवोनिनयानिस्वंपाथोअपीथेतिमंत्रमेकश्रुत्यापत्न्यावाचयन्स्वयंवापठन्प्रत्यङ्मुखंनिषिच्यांजलिस्थजलैःपापापनोदार्थमात्मानंयज
मानंपत्नींचप्रोक्षेत् ॥ पत्नीतज्जलंबर्हिषिनिषिंचेत् ॥ अथवायजमानएवस्ववामपाणावुत्तानेबर्हिषीनिधाय ॥ तत्रदक्षिणपाणिनापूर्णपात्रमा
दाय ॥ माहंप्रजामित्यनेनतज्जलंप्रत्यङ्मुखंनिषिच्य ॥ नाआपःसमुद्रंगच्छंतीतिध्यात्वापाणिस्थजलैरात्मानंपत्नींचप्रोक्षेत् ॥ ततःकर्ताग्ने
र्वायव्यांस्थितःसंस्थाजपेनोपतिष्ठेत ॥ तद्यथा ॥ अग्नेत्वंनइतिचतसृणांगोपायनालोपायनावाबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः ॥ अ
ग्निर्देवता ॥ द्विपदाविराट्छंदः ॥ अग्न्युपस्थानेवि० ॥ ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंर
यिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेन
मश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदे

स्मा. २८.

भा

हिमेहव्यवाहन ॥ देहिमेहव्यवाहनोन्नमः ॥ ततोब्रह्मापित्तत्रैवस्थित्वाएतैरेवोपतिष्ठेत् ॥ ततः कर्ताआचारात् ॥ मानस्तोके[illegible]कुत्सोरुद्रोजगती ॥ विभू-
तिग्रहणेवि० ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः सदमित्त्वाहवामहे ॥ इतिस्तु
वबिलपृष्ठेनविभूतिंगृहीत्वा ॥ ॐ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्देवानांत्र्यायुषमि
तिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे ॥ सर्वमस्तुशतायुषमितिशिरसिधारयेत् ॥ केचित्तूपस्थानात्पूर्वंविभूतिधारणमाहुरि
ति ॥ ततः कर्तापरिस्तरणानिविसृज्याग्निंपरिसमुह्यपरिषिच्यपुष्पादिभिरलंकृत्यनैवेद्यंतांबूलंचनिवेद्यब्रह्मणेयथोक्तदक्षिणांदक्षिणाभावेद्रु
तशेषंयूतादिसहिरण्यंदत्वाब्रह्मणेवे न्यस्मैब्राह्मणायदत्वापात्राणिप्रक्षाल्यपूर्वक्रमेणद्वंद्वशउत्सृज्ययस्यस्मृत्येतिश्रीविष्णुंनत्वाचम्यधृतप
त्रग्रंथिंविस्रस्यशुद्धदेशेक्षिपेत् ॥ दर्शेतुअग्नीषोमस्थानेइंद्राग्नीइतरत्सर्वंसमानंनचदर्शितमेवसद्यस्कालायांपौर्णमास्यां[illegible]भय
त्रवायागदिनएवप्रातर्होमानंतरमन्वाधायेध्माबर्हिषीसन्नह्येष्टिप्रयोगंकुर्यात् ॥ ॥ इतिश्रीमद्दिङ्मुकुटमाणिक्यश्रीभट्टरामेश्वरसूरिसूनुनार
यणभट्टविरचितेप्रयोगरत्नेपार्वणस्थालीपाकप्रयोगः समासः ॥ ॥ अथेष्टिप्रायश्चित्तानि ॥ ॥ प्रमादादन्याग्नौचेत्स्वयंयजेतस्वाग्न
ग्नौवायजेतचेत्तदाप्रायश्चित्तंपथिकृच्चरुहोमंकृत्वापुनस्तृतीयादितिथिषुअन्वाधानपूर्वकमिष्टिंकुर्यात् ॥ अन्वाधानात्पूर्वंस्त्रीरजस्वला भ
तितदापंचमादिदिनेसद्यस्कालान्वाधानपूर्वकंजुहुयात् ॥ अन्वाधानात्परतोरजस्वलाचेत्तांगृहांतरेस्थापयित्वाप्रतिपद्येवजुहुयात् ॥ सू. तक. ॥

नेष्टिरतीनाचेदागामिपर्वपूर्वातिथिषु द्वितीयांचतुर्थींनवमींचतुर्दशींचविहायान्यासुतामतिपन्नेष्टिंकुर्यात् ॥ तास्वतिक्रमे ; नंतरे पर्वणि पथिकृद्यागपू-
र्वकमतिपन्नयागंकृत्वाततनपर्वणोन्वाधानंकुर्यात् ॥ तत्राप्यतिक्रमे ॥ अतिपन्नस्य पादकृच्छ्रप्रायश्चित्तंकृत्वा ॥ कालप्राप्तांप्रतिपदिष्टिंसद्यस्काल-
न्वाधानपूर्वकंकुर्यात् ॥ द्वितीयपर्वातिक्रमेपूर्ववदागामिपर्वमध्येकुर्यात् ॥ तत्राप्यतिक्रमे ततनपर्वणि पथिकृत्पूर्वकंकार्यम् ॥ पथिकृदिष्टिस्तंत्र-
प्राक्पर्वेष्ट्यासमानतंत्रावाकुर्यात् ॥ तत्राप्यतिक्रमे तृतीयप्रतिपदि अतिपन्नद्वयप्रायश्चित्तंकृच्छ्रद्वयंचरित्वाप्राप्तकालामिष्टिंकुर्यात् ॥ तत्राप्यति-
मे आगामिपर्वपर्यंतंपूर्वोक्तवत्कुर्यात् ॥ तत्राप्यतिक्रमेस्मार्ताग्निर्नश्यति तेन विधिना पुनःसंधानंकृत्वाप्राप्तेपर्वणि नदिष्टिंकुर्यात् ॥ अन्वाधाने-
ष्टिमध्येचंद्रग्रहणंचेदिष्टिदिने हविरासादनांतंकृत्वा ॥ अन्वाधानेष्टिमध्येचंद्रग्रहदोषप्रायश्चित्तार्थमाज्यहोमंकरिष्ये इति संकल्प्य ॥ नवोनवो-
वतीत्यस्य सूर्यासावित्रीचंद्रमास्त्रिष्टुप् ॥ ॐ नवोनवोभवति० ॥ यमादित्या अं २ शुमाप्याययंति यमक्षितमक्षितयः पिबंति ॥ तेननोराजा-
वरुणोबृहस्पतिराप्याययंतुभुवनस्यगोपाः ॥ आभ्यां द्वे प्रकृताज्येनैवाहुती हुत्वा ॥ अग्न्यलंकरणादितंत्रंकुर्यात् ॥ सूर्यग्रहणंचेद्धविरासादनांते निरू-
आज्याहुतयः ताश्च ॥ चित्रंदेवानामित्यांगिरसः कुत्सः सूर्यस्त्रिष्टुप् ॥ ॐ चित्रंदेवानामुदगा० ॥ उदुत्यंकण्वः प्रस्कण्वः सूर्योगायत्री ॥ ॐ उदुत्यंजातवेद०
उद्वयमित्यस्य काण्वः प्रस्कण्वः सूर्योनुष्टुप् ॥ ॐ उद्वयंतम० एते हुत्वा अग्न्यलंकरणादितंत्रशेषंसमापयेत् ॥ इदं प्रयोगपारिजाते संग्रहोक्तं प्रायश्चित्तं ॥
ग्रंथांतरे तु शौनकोक्तमुक्तं ॥ तद्यथा ॥ इष्टिदिने हविरासादनांते कृतेन्वाधानेष्टिमध्ये चंद्रग्रहणजनितवैगुण्यपरिहारार्थं शौनकोक्तामाज्याहुतिमुप-

स्थानंचकरिष्ये इतिसंकल्प्य ॥ अत्राहगोरित्यस्यराहूगणश्चंद्रमागायत्री ॥ इष्टिमध्येचंद्रग्रहणवैगुण्यपरिहारार्थमाज्यहोमेवि० ॥ ॐ अत्राह० इत्या

न्वतनामत्वष्टुरपीच्यं ॥ इत्याचंद्रमसोगृहेस्वाहा ॥ चंद्रमसइ० ॥ नवोनवोइत्यस्याःसूर्यासावित्रीचंद्रमास्त्रिष्टुप् ॥ चंद्रोपस्थानेवि० ॥ ॐ नवोनवोभ

वोभवतिजा० ॥ सूर्यग्रहणेतुसंकल्पादौचंद्रपदस्थानेसूर्यपदप्रयोक्तव्यम् ॥ उदुत्यमित्यस्यकाण्वःप्रस्कण्वःसूर्योनुष्टुप् ॥ ॐ उद्वयंतमसस्प०

स्वाहा ॥ सूर्यायेदं० ॥ चित्रंदेवानामित्यस्यकुत्सःसूर्यस्त्रिष्टुप् ॥ सूर्योपस्थानेवि० ॥ ॐ चित्रंदेवाना० ॥ इतीष्टिमध्येग्रहणेनिर्णयः ॥ अन्वाधानेष्टि

मध्येऽग्न्यनुगतौ अयाश्चेतिमंत्रेणवक्ष्यमाणवत्पुनःसंधानंकृत्वा ॥ ॐ भूर्भुवःस्वःस्वाहेतिमंत्रेणसंकल्पपूर्वकंप्रायश्चित्तंसंस्कृताज्येनहुत्वापुनरन्वा-

धानपूर्वकमिष्टिंकुर्यात् ॥ अन्वाधानेष्टिमध्येप्रयाणोपस्थितौतुभ्यंताअंगिरस्तमेतिसंकल्पपूर्वकंसंस्कृताज्यंहुत्वा ॥ अरण्यादिषुसमारोप्यहोमका

लेप्रतिष्ठाप्यप्रातर्होमपूर्वकमिष्टिंकुर्यात् ॥ अन्वाधायप्रतिपदिप्रमादादिष्ट्यकरणेतृतीयादितिथिषुप्रातरौपासनोत्तरंसंकल्पपूर्वकंसंस्कृताज्यंव्यस्त

समस्तव्याहृतिभिर्हुत्वापुनरन्वाधाययागंकुर्यात् ॥ अथप्रसंगादत्रैवनैमित्तिकप्रायश्चित्तान्युच्यंते ॥ शम्यापरिमितदेशादर्वाग्बहिरायतनात्कृतश्चे

दग्निःसचप्रायश्चित्तसमाप्तिपर्यंतंस्थितियोग्यस्तदा ॥ ॐ इदंतएकंपरऊतएकंतृतीयेनज्योतिषासंविशस्व ॥ संवेशनेतन्वा १ श्चारुरेधिप्रियोदेवा

नांपरमेजनित्रे ॥ इतिमंत्रेणायतनेप्रक्षिप्यव्याहृतिभिराज्याहुतीर्जुहुयात् ॥ अत्रकारिका ॥ अर्वाक्शम्यापरासात्तुबहिरायतनात्कृतम् ॥ प्रायश्चि-

त्तसमाप्त्यंतंसमर्थोजीवितुंयदि ॥ इदंतइत्यृचातस्यस्थानेग्निंप्रक्षिपेत्पुनः ॥ आज्याहुतीश्चजुहुयाद्व्याहृत्यारब्धैश्चपूर्ववत् ॥ शम्याषट्त्रिंशदंगुले

त्यापस्तंबः ॥ शम्यापरिमितदेशाद्बहिरायतनाद्गतेऽग्नौ पथिकृतेऽग्नयेचरुंनिर्वपेत् ॥ अशक्तौद्वादशगृहीतेनाज्येनस्रुचंपूरयित्वा अग्नये पथिकृतेस्वाहे
तिपूर्णाहुतिंजुहुयात् ॥ स्रुवाहुतिंवा ॥ तदुक्तंकारिकायां ॥ अतिक्रांतोयदाशम्यापरासमनलोभवेत् ॥ चरुःपथिकृतेकार्यः पूर्णाहुतिरथापिवा ॥
पूर्णाहुतिलक्षणंकारिकायामुक्तं ॥ आज्यंद्वादशकृत्वस्स्रुग्गृहीत्वापूरयेत्स्रुचम् ॥ तयात्वाज्याहुतिः कार्या सापूर्णाहुतिरिष्यते ॥ स्रुवपूर्णाहुतिर्वा
स्यादित्येकेयाज्ञिकाविदुः ॥ यद्यग्निःस्वयंज्वलतितदा ॥ उद्दीप्यस्वजातवेदोऽपघ्नंनिर्ऋतिंमम ॥ पशूंश्चमह्यमावहजीवनंचदिशोदश ॥ मानोहिं
सीर्जातवेदोगामश्वंपुरुषंजगत् ॥ अबिभ्रदग्नआगहि श्रियामापरिपातयइति ॥ मंत्राभ्यांसमिद्द्वयमग्नावादध्यात् ॥ २ ॥ अग्नेश्चमलमूत्राद्युपघा
ते ॥ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतन्वोवर्धयस्वसत्याःसंतुयजमानस्यकामाइतिसमिधमादध्यात्
तदुक्तंकारिकायां ॥ स्वयंज्वलेच्चेदुद्दीप्यस्वेतिद्वाभ्यांसमिद्द्वयं ॥ आधेयस्तुपघातेतुपुनस्त्वेत्यनयासमित् ॥ हूयमानाहुतिर्यदिबहिःस्कंदेत्तदादेवां
जनमित्यनेनतामभिमृश्यद्रप्सश्चस्कंदेत्याज्याहुतिंजुहुयाद्व्याहृतिभिश्च ॥ ततःस्कन्नमनलेक्षिपेत् ॥ मंत्रौचदेवांजनमगन्यज्ञस्ततस्यमाशी
रवतुवर्धतां ॥ भूतिर्घृतेनमुंचतुयज्ञोयज्ञपतिमंहसः ॥ भूपतयेस्वाहा ॥ भुवनपतयेस्वाहा ॥ भूतानांपतयेस्वाहा ॥ यज्ञस्यत्वाप्रमयोन्मयाभिमया-
प्रतिमया ॥ द्रप्सश्चस्कंदपृथिवीमनुद्यामिमंचयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसंचरंतंद्रप्संजुहोम्यनुसप्तहोत्राः ॥ अत्रकारिका ॥ आहुतिर्हू
मानातुबहिःस्कंदेतवैयदा ॥ देवांजनमगन्यज्ञइत्यनेनाभिमृश्यतां ॥ द्रप्सश्चेत्याहुतिंहुत्वाप्रक्षिपेदनलेपुनः ॥ देवांजनेतिसर्वत्रस्कन्नंत्वभि

द्धविः ॥ होतव्याज्याहुतिस्तत्र व्याहृत्याख्यैः समुच्चयात् ॥ यागात्प्रागन्वाधाननिर्वापादिषु ज्ञातो देवताव्युत्क्रमो यदा ज्ञानस्तदा व्याहृतिभिर्हुत्वा
हितदेवतां यजेत् ॥ यागादूर्ध्वं देवताव्युत्क्रमज्ञानं तु व्याहृतिभिर्हुत्वानं यागमावर्तयेत् ॥ यदा त्वप्रकृतां कांचिद्देवतां यजेत्तदा व्याहृतिभिर्हुत्वा प्रकृ-
देवतायै यागमावर्तयेत् ॥ अत्र कारिका ॥ प्राग्यागाद्व्युत्क्रमे ज्ञानइदं कृत्वा यजेत्तदा ॥ अविज्ञातविपर्यासो विहितां देवतां स्मरन् ॥ इष्टवांस्तत ऊ-
र्ध्वं तु व्युत्क्रमावगमे सति ॥ प्रायश्चित्तमिदं कृत्वा यागं त्वावर्तयेत्तदा ॥ यदा त्वविहितां कांचिद्देवतामिष्टवांस्तदा ॥ प्रायश्चित्तमिदं कृत्वा यागं त्वावर्तये
त्कृतम् ॥ इदं व्याहृतिहोमाख्यं ॥ अन्यान्यपि प्रायश्चित्तानि कारिकायां ॥ पवित्रं यदि नश्येच्चेत्स्यात् पवित्रवते चरुः ॥ यदा हविरपक्कं स्यात्तेनैव हवि-
षा यजेत् ॥ चतुःशरावमात्रं तु पचेद्व्रीहिभिरोदनं ॥ भोजयेत्तेन चान्नेन चतुरो ब्राह्मणानथ ॥ बहु दग्धमदग्धं वा किंचिदेव यदा हविः ॥ शिष्टेनेष्टा पुन-
र्यागः स्यादारभ्यादितस्तदा ॥ कृत्स्नं दग्धं यदा तत्स्यात्पुनरुत्पादयेद्धविः ॥ स एव यागः कर्तव्यः पुनर्यागस्तु नेष्यते ॥ मध्यात्पूर्वार्धतो वत्तं यदि दुष्टं-
हविर्भवेत् ॥ तस्यैव हविषो वद्येन्मध्यात्पूर्वार्धतः पुनः ॥ इध्माधाने कृते दुष्टं प्रधानहविरत्र चेत् ॥ तत्स्थाने जुहुयादाज्यमदुष्टं च जुहोत्यथ ॥ एवं स
माप्य यद्दुष्टं तदप्सु प्रक्षिपेत्पुनः ॥ अन्वाधानादिको यागः पुनः कर्तव्य एव तु ॥ प्रागिध्माधानतो दुष्टे प्रधानहविषि त्वथ ॥ तद्धविः पुनरुत्पाद्य पूर्ववत्तत्स
मापयेत् ॥ अंगानां चेद्धविर्दुष्टं तदप्सु प्रक्षिपेत्पुनः ॥ स्विष्टकृद्धविषो दोष आज्येनैव समापयेत् ॥ प्रच्युतैस्तु नखैः केशैः कीटैर्वामेध्यसेविभिः ॥
वसासृक्कुशशुक्रमज्जास्थिमूत्रविट्स्वेददूषकैः ॥ श्लेष्माद्यैरपि बीभत्सैर्दुष्टानि स्युर्हवींषि चेत् ॥ भिन्नानि चैव सिक्तानि दुष्टानि स्युः क्षिपेज्जले ॥

स्रुक्कूर्चेद्ध्मध्येतनन्तर्द्धिन्यासमात्स्यजुहुयाद्धविः ॥ वानस्पत्यानि भिन्नानि प्राग्दंडान्यनले क्षिपेत् ॥ अन्यच्चाशकृचिसंबंधं मृन्मयं भिन्नमेव वा ॥ भूमिर्भूमिंतु मं-
त्रेण प्रक्षिपेदेवतज्जले ॥ मंत्रः ॥ भूमिर्भूमिमगान्माता मातरमप्यगात् भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ संसृष्टो यस्य गृह्याग्निर-
न्यगृह्याग्निना यदि ॥ चरुर्विविच्य येकार्यो यद्वा पूर्णाहुतिर्भवेत् ॥ अग्निर्गूर्णाभवेदेषु विविचित्वादिको गुणः ॥ चरुः क्षामाय कर्तव्यो गृहदाहे तु वै भ-
वेत् ॥ शिवाग्निना तु संसर्गं कुर्वीत शकृच्चयेच्चरुं ॥ पचनाग्नेस्तु संसर्गे संवर्गायचरुर्भवेत् ॥ वैद्युतेन तु संसर्गं कुर्यादप्सुमते चरुं ॥ प्रायश्चित्तचरुस्थाने
वा पूर्णाहुतिरिष्यते ॥ पर्वण्यात्यामशुपातेन कुर्याद्भूतभृते चरुम् ॥ समानतंत्रं कुर्वीत पार्वणेन तु कर्मणा ॥ अक्तुनाग्रयणो भीयान्नवान्नं यस्तु वै ततः
वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा ॥ द्विषदन्नं यदा भुंक्ते तत्राप्येष चरुर्भवेत् ॥ कपालनाशेप्येषस्यात्क्षपणाकर्मनासनि ॥ कपालं नष्टं यद्भिन्नं
प्रागेवश्रमणाद्यदि ॥ तदातंत्रोक्तमंत्रेण कपालं संदधात्यथ ॥ अभिन्नो घर्मइत्याभ्यामप्सु ततं प्रक्षिपेदथ ॥ तच्चेदशकृचिसंबद्धमाभ्यामेव क्षिपेज्ज-
ले ॥ भिद्येद्यदि पुरोडाश उद्गच्छेदथवा यदि ॥ किंसुत्पतसि मंत्रेण बर्हिष्येनं निधायतु ॥ अभिमंत्रयते तं तु मा हिंसीरिति मंत्रतः ॥ श्रूयते मृतशब्दश्चे-
द्यजमाने तु जीवति ॥ अग्नये सुरभिमते चरुः पूर्णाहुतिस्तु वा ॥ अथ यस्य वधूर्गौर्वा जनयेच्च यमौ ततः ॥ समरुद्भ्यश्चरुं कुर्यात् पूर्णाहुतिमथापि वा
समारूढसमिन्नाशे पुनराधेयमिष्यते ॥ श्रौतेनोक्तमविरोध्यन्यन्नं सूत्र्यं तु ज्ञानशास्त्विदं ॥ प्रायश्चित्तमशेषस्य यत्र नोक्तो भवेद्विधिः ॥ होनव्याज
हुतिस्तत्र भूर्भुवः स्वरिती हुतु ॥ निमित्तानंतरं सर्वं प्रायश्चित्तं भवेदिह ॥ प्रागेवोत्सवने दोष आज्यसंस्कारतो यदि ॥ प्रायश्चित्तं भवेदाज्यसंस्क

नंतरं तदा ॥ व्युत्क्रमे दैवतानां तु संकल्पादौ भवेद्यदि ॥ मंत्राणां व्युत्क्रमस्तद्वद्धोमादौ तु भवेद्यदि ॥ मध्यात् पूर्वार्द्धं तथैवेति व्युत्क्रमोस्य भवेद्यदि ॥ द्रव्या
णां व्युत्क्रमः स्याच्चेत्तथा निर्वपणादिषु ॥ यद्वोदेवाकृच्चाब्रह्माज्जुहुयात्तु स्रुवाहुतिं ॥ यत्सुरव्यं स्वगृहे द्रव्यं होमकर्त्रे ददातिनतत् ॥ यजमानस्तु जुहु
यात् ब्रह्माभावे स्रुवाहुतिं ॥ कस्मैचिद्ब्राह्मणायास्मिन् पक्षे द्रव्यं ददातिनतत् ॥ होनव्यैकाहुतिश्चात्र व्यात्हृत्यारव्यैः समुच्चयात् ॥ सर्वत्रैव प्रा-
यश्चित्तरूपं जपं होमं वा ब्रह्मैव कुर्यात् ॥ जुहोतिजपतीति प्रायश्चित्ते ब्रह्माणमिति सूत्रकृदुक्तेः ॥ तदभावे तु यजमानः समानन्यायत्वात्
यत्र स्वकाले कर्माकरणनिमित्तप्रायश्चित्तमुक्तं तस्मिन् प्रायश्चित्ते कृते तीतं कर्म कार्यं न वेति मतभेदः ॥ तदुक्तं कारिकायाम् ॥ प्रायश्चित्ते कृ
ते पश्चादतीतमपि कर्म वै ॥ कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥ कर्मसमाप्तिसमये गलीपेप्रायश्चित्तमाह ॥ प्रमादात् कुर्वतां कर्म
प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति ॥ एवमन्यान्यपि प्रायश्चित्तानि ग्रंथांतरे वगंतव्यानि ॥ इति श्रीभट्ट-
रामेश्वरसूरिसूनुनारायणभट्टविरचिते प्रयोगरत्ने दृष्टप्रायश्चित्तानि नैमित्तिकप्रायश्चित्तानि च ॥ ॥ अथ सकलकर्मसाधारणपरि-
भाषा ॥ तत्र कारिका ॥ आज्यैकद्रव्यके होमे स्याच्चेदाज्यपरिग्रहः ॥ स्यात् परिस्तरणं तत्र कृताकृतमिति स्थितिः ॥ नोच्चारयति यत्राज्यप
दं कर्मसु सूत्रकृत् ॥ अनादिष्टाज्यहोमेषु तत्र निव्यापरिस्तृतिः ॥ सर्वस्मिन् पाकयज्ञे तु आज्यभागौ कृताकृतौ ॥ सर्वेषु पाकयज्ञेषु भवेद्ब्रह्मा
कृताकृतः ॥ धन्वंतरिमखे ब्रह्मा नित्यः शूलगवे तथा ॥ ऊर्ध्वे होमं क्वचिन्नाम्ना क्वचिन्मंत्रेण सूत्रकृत् ॥ नोभयं यत्र तत्रेष्टं हवनं नामधेयतः

प्र·र·
२९

नैकेकिंचनपक्षोयंचौलादावाश्रितोयदा ॥ तदग्निरिंद्रइत्याद्याहोनव्याहृतिहोमिकृत् ॥ अनेकेपाकयज्ञाःस्युरेकस्मिन्कालएवतु ॥ समानतंत्रका
र्यानितत्रावृत्तिरिष्यते ॥ पात्रासादनमिच्छांतआज्याधिश्रयणादिच ॥ स्रुवादिमार्जनंचैध्मरज्जुमहरणंतथा ॥ पूर्णपात्रंभवेन्नित्यमाज्य
स्योत्पवनंतथा ॥ द्रव्यानादेशआज्यंस्यादनुक्तेसाधनेस्रुवः ॥ जपानुमंत्रणेमंत्रउपस्थानाभिमंत्रणे ॥ मंत्रोयःकर्मकरणेगृह्यकर्मण्युपां
शुषट् ॥ इदंकार्यमनेनेतिनक्वचिद्दृश्यतेविधिः ॥ लिंगादेवेदमर्थत्वंयेषांतेमंत्रसंज्ञिताः ॥ मंत्रांतेकर्मकर्तव्यंमंत्रे[illegible]करणत्वतः ॥ कर्मा-
वृत्तौतुमंत्रस्याप्यावृत्तिर्गृह्यकर्मणि ॥ मंत्रोक्तदेवतानांतुतूष्णीमेवाथनिर्वपेत् ॥ चतुरश्चतुरोमुष्टीन्प्रोक्षणंचतथाभवेत् ॥ सहैवश्रपयेत्तत्र
नास्तिव्युद्धरणंतदा ॥ आदिष्टमंत्रहोमेषुसर्वत्रैवंप्रतीयतामिति ॥ कृताकृतंवैकल्पिकं ॥ ऊर्ध्वइति ॥ गृह्यसूत्रकारः ॥ क्वचिन्नाम्नाहोममा
ह ॥ यथासाविश्वैब्रह्मणइति ॥ क्वचिन्मंत्रेणाहयथा ॥ अग्नेनयसुपथारायेअस्मानितिचतसृभिरिति ॥ यत्रतुननामतोनवामंत्रतो होम
उच्यतेकेवलंतद्धितादिनादेवताविधानं ॥ यथाप्राजापत्यस्थालीपाकस्यहुत्वाकाम्याश्चरवइत्यादौ ॥ तत्रचतुर्थ्यंतेनदेवतानाम्नाहोमइत्यर्थः
अनेकइति ॥ यथाआग्रयणाश्वयुजीकर्मणीयदाश्वयुज्यांक्रियेतेतंत्रेणतयोरेककालताजपेति ॥ जपादिषुषट्सूयस्तृतीयोमंत्रउक्तस्तस्यल
क्षणमेतत् ॥ लिंगादर्थप्रकाशनसामर्थ्यात् ॥ इदमर्थत्वंतत्कार्यार्थत्वं ॥ नतुमंत्रसामान्यलक्षणमिदमव्याप्त्यतिव्याप्त्यादिदोषापत्तेः
तस्माद्विशेषस्यैवमंत्रस्यलक्षणं ॥ एवंचमंत्रशब्दोत्रूयर्थः ॥ सामान्यार्थोविशेषार्थश्चेतिभगवान् ॥ यत्रोपदिश्यतेकर्मकर्तुरंगंनतूच्यते

प·भा·
स्य
२९

दक्षिणस्तत्रविज्ञेयः कर्मणांपारगःकरः ॥ यत्रदिङ्नियमोनोक्तोजपहोमादिकर्मसु ॥ तिस्रस्तत्रदिशःशस्ताऐंद्रीसौम्यापराजिता ॥ अपरा
जिताऐशानी आसीनऊर्ध्वःप्रह्वोवानियमोयत्रनोच्यते ॥ तदासीनेनकर्तव्यंनप्रह्वेणनतिष्ठता ॥ तथा ॥ अनादेशेस्वयंकर्तासर्वत्रऋत्विक्पुरो
हिताः ॥ प्राक्तूलतासाधनानांप्राक्संस्थत्वंचकर्मणां ॥ तथा ॥ अविज्ञातस्वरामंत्राःप्रयोक्तव्याःप्रयोक्तृभिः ॥ एकश्रुत्यैवहोमेषुविज्ञाताश्च
विकल्पतः ॥ यस्मिन्मंत्रेनसंपठितःस्वाहाकारोभवेद्यदि ॥ स्वाहांतेनप्रयोक्तव्योहोमेषुप्रणवादिकः ॥ यत्रस्यान्नप्रत्यृचंशब्दस्तत्रैवंहोमइ-
ष्यते ॥ ऋगंतेनत्रहोतव्यंस्वाहाकारंपठेत्ततः ॥ जानीयान्नप्रत्यृचंमंत्रंतदन्यान्नुपदेशतः ॥ ॐभूर्भुवःस्वश्चेतितिस्रोव्याहृतयोजपे ॥ आभि
श्चहोमेतिसृभिश्चतुर्थीस्यात्समासतः ॥ अथप्रयोगमंत्राणांषड्विधंलक्षणंस्मृतं ॥ जपान्नुमंत्रणाप्यायनाभिमंत्रास्तथैवच ॥ उपस्थाकर्मी
करणंषडुपांशुप्रयोगतः ॥ जपमुच्चारणंविद्यात्फलमर्थमपितद्भवेत् ॥ अर्थतःकार्यलाभश्चेदर्थएवकृतोभवेत् ॥ मंत्रमुच्चारयन्नेवमंत्रार्थंले-
नसंस्मरेत् ॥ शेषिणंतन्मनाभूत्वास्यादेतदनुमंत्रणं ॥ एतदेवाभिमंत्रस्यलक्षणंचेक्षणाधिकं ॥ अद्भिःसंस्पर्शनाधिक्यात्तदेवाप्यायनंस्मृतं
उपस्थानंतदेवस्यात्प्रणतिस्थानसंयुतं ॥ बाह्यंकर्मयदेतेषुकर्मकालेक्रियेनयत् ॥ कर्मणःकरणंतस्यविहितार्थप्रकाशनं ॥ मंत्रेणकृत्वामं-
त्रांतेक्रियतेकर्मयेषुतु ॥ तथा ॥ प्राजापत्यमुपांशुस्यान्मध्यंसावित्रमेवच ॥ कृताकृतंब्रह्मवरणंब्रह्माचाज्यस्यसंस्कृतिः ॥ संमार्गःस्रुव-
दर्व्योश्च आज्यभागौपरिस्तृतिः ॥ व्रीहीणामवघातश्चतंडुलेषुकृताकृतः ॥ द्रवीभूतघृतस्यापिविलापनविधिस्तथेति ॥ अत्रविहितंकर्मप-

वित्रपाणिः कुर्वीत ॥ यदाहहारीतः ॥ जपहोमहराद्येते अस्करादिव्यरूपिणः ॥ पवित्रकृतहस्तस्य विद्रवंति दिशो दश ॥ अत्रिः ॥ उभाभ्यामपि
पाणिभ्यां विप्रैर्दर्भपवित्रके ॥ धारणीये प्रयत्नेन ब्रह्मग्रंथिसमन्विते ॥ ब्रह्मग्रंथिलक्षणं गरुडपुराणे ॥ अस्त्यन्यो वैष्णवो मार्गो ब्रह्मग्रंथि-
विनिर्मितः ॥ सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥ नब्रह्मग्रंथिमन्प्रोक्तं पवित्रं वेदवेदिभिः ॥ पवित्रकर्तुरभि सुखप्रदेशो ब्रह्ममार्गः
पवित्रदर्भसंख्या च तत्रैव ॥ सप्तभिः कुशपिंजूलैः कुर्याद्ब्रह्मपवित्रकं ॥ एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमं ॥ सर्वेषां वा भवेद्द्वाभ्यां पवित्र-
ग्रंथितं नवा ॥ त्रिभिस्तु शांतिकं कार्यं पौष्टिकं पंचभिस्तथा ॥ चतुर्भिरभिचारार्थं कुर्वन् कुर्यात्पवित्रकं ॥ हेमपवित्रं विशिष्य प्रशस्त-
मुक्तं हेमाद्रौ ॥ अन्यानि च पवित्राणि कुशदूर्वात्मकानि च ॥ हैमात्मकपवित्रस्य त्वेकां नार्हंति वै कलामिति ॥ द्रव्यभेदेनाहुतिप्रमाणभेद
उक्तः ॥ सिद्धांतशेखरे ॥ कर्षप्रमाणमाज्यं स्यान्मधुक्षीरं च तत्समं ॥ तंडुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ॥ कर्षमात्राणि भक्ष्या-
णि लाजा मुष्टिमिता मताः ॥ अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकं ॥ मूलानां तु त्रिभागः स्यात्कंदानामष्टमांशकः ॥ इक्षुः पर्वप्रमा-
णं स्याद्दंगुलद्वितयं लता ॥ प्रादेशमात्राः समिधो व्रीहीणां मंजरीः समाः ॥ तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः ॥ पत्रपुष्पफलादीनां
स्वमानाहुतिरिष्यते ॥ चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः ॥ हरिमंथसमा प्रोक्ता गुग्गुलुर्बदरीसमः ॥ आहुतीनामिदं मानं कथितं वेद-
वेदिभिरिति ॥ हरिमंथश्चणकः ॥ मृगीमुद्रालक्षणमुक्तं तत्रैव ॥ स्यात्त्रिमुद्रा मृगीमुद्रा होमे सर्वफलप्रदेति ॥ अरणिजन्याद्देरग्नेरुत्तमादि

त्वमुक्तंनत्रैव ॥ उत्तमोरणिजन्योग्निर्मध्यमः सूर्यकांतजः ॥ उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहाद्द्विजः ॥ एतमग्निंताम्रसौवर्णरजतादिपात्राभ्यांप्र-
णयेत् ॥ तथाचात्रिः ॥ पात्रांतरेणपिहितेनाम्रपात्रादिकेशुभे ॥ अग्निप्रणयनंकुर्याच्छरावेनाद्दशेऽपिवा ॥ आपस्तंबः ॥ नाग्नीक्षितमिंधनमग्नावाद
ध्यात् ॥ बर्हिरर्थेकुशाभावेप्रतिनिधयः ॥ स्मृत्यर्थसारे ॥ बर्हिः काशमयंग्राह्यंनलभ्यंतेकुशायदि ॥ शरोशीरसुतष्णाश्चबालसुंजार्जुनेक्षवः ॥ सु
गंधितेजनादारुदूर्वाक्षीरद्रुमाअपि ॥ चद्वासर्वतृणेभ्योपिशस्तंबर्हिर्यथेप्सितं ॥ शकुमूलकृष्णमूलदुर्गंधितृणवर्जितं ॥ शातातपः ॥ समित्पु-
ष्पफलादीनिब्राह्मणःस्वयमाहरेत् ॥ शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्व्रजत्यधः ॥ विष्णुः ॥ दर्शेश्रावणमासस्यसमंत्रोत्पाटिताःकुशाः ॥ अयात
यामास्तेज्ञेयानियोज्याःसर्वकर्मसु ॥ वर्षमितिशेषः ॥ कुशोत्पाटनमंत्रमाहकश्यपः ॥ शुचौदेशेशुचिर्भूत्वास्थित्वापूर्वोत्तरामुखः ॥ ॐकारेणै-
वमंत्रेणकुशान्स्पृष्ट्वाद्विजोत्तमः ॥ विरिंचिनासहोत्पन्नपरमेष्ठिनिसर्गज ॥ नुदसर्वाणिपापानिदर्भस्वस्तिकरोभव ॥ इमंमंत्रंसमुच्चार्यततःपूर्वोत्त
रामुखः ॥ हुंफट्कारेणदर्भांस्तुसकृच्छित्वासमुद्धरेत् ॥ हारीतः ॥ अच्छिन्नाग्रान्पवित्रांश्चसमूलान्कोमलान्शुभान् ॥ पितृदेवद्विजार्थेहिसमा
दद्यात्कुशान्द्विजः ॥ इध्मवृक्षानाहमरीचिः ॥ पालाशःखदिरोश्वत्थःशमीवटउदुंबरः ॥ अपामार्गार्कदूर्वाश्चकुशाश्चेत्यपरेविदुः ॥ दशद्वादशवांगु-
ल्यःसमाःपंचदशस्मृताः ॥ नास्त्वंगुष्ठाःसत्वचश्चसार्द्राइध्मइहोत्तमाः ॥ ब्रह्मपुराणेपि ॥ शमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवाः ॥ अश्वत्थोदुंबरो
बिल्वश्चंदनःसरलस्तथा ॥ सालश्चदेवदारुश्चखदिरश्चैवयज्ञियाः ॥ दक्षिणायांविशेषउक्तोमहाभारते ॥ वेदोपनिषदेचैवसर्वकर्मसुदक्षि-

णा ॥ सर्वत्रतुप्रचोदिष्टभूमिर्गावोथकांचनं ॥ बैजवापः ॥ शिवनेत्रोद्भवंयस्मात्तस्मात्तत्पितृवल्लभं ॥ अमंगलंतद्युत्लेनदेवकार्येषुवर्जितं ॥ अन्यच्च
यज्ञोपवीतेद्वेधार्येश्रौतेस्मार्तेचकर्मणि ॥ तृतीयमुत्तरीयार्थेवस्त्राभावेतदिष्यते ॥ सदोपवीतिनाभाव्यंसदाबद्धशिखेनच ॥ विशिखोव्युपवीतश्चयत्
करोतिनतत्कृतंभवेत् ॥ अत्रपूर्वार्धेनसदाशब्दवशात्पुरुषार्थता ॥ उत्तरार्धेनविपर्ययनिंदाद्वारेणसशिखसोपवीताभ्यांकर्तव्यंकर्मेतिकीर्तनात्कर्मा
र्थता ॥ एवंचकर्मकालेशिखाबंधोपवीताभावेकर्मांगलोपनिमित्तंपुरुषार्थलोपनिमित्तंचेतिप्रायश्चित्तद्वयंभवति ॥ दर्शपूर्णमासयोरिवानृतवदनेक
र्मणोबहिस्तुपुरुषार्थलोपनिमित्तमेकमेवेतिविवेकः ॥ संग्रहे ॥ प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तते ॥ सनाप्नोतिफलंतस्य परत्रेतिश्रुतिस्मृती
बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रचोदितं ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेत् ॥ अथकर्मविशेषेग्निनामानि ॥ पावकोलौकिकोह्यग्निःप्रथमः
संप्रकीर्तितः ॥ अग्निस्तुमरुतोनामगर्भाधानेविधीयते ॥ ततःपुंसवनेज्ञेयःपावमानस्तथैवच ॥ सीमंतेमंगलोनामप्रबलोजातकर्मणि ॥ नाम्निवैपा-
र्थिवोह्यग्निःप्राशनेतुशुचिस्मृतः ॥ सभ्योनामसचौलेतुव्रतादेशेसमुद्भवः ॥ गोदानेसूर्यनामाग्निर्विवाहेयोजकोमतः ॥ आवसथ्येद्विजोज्ञेयोवैश्व-
देवेतुरुक्मकः ॥ प्रायश्चित्तेविटश्चैवपाकयज्ञेषुपावकः ॥ देवानांहव्यवाहश्चपितृणांकव्यवाहनः ॥ शांतिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः ॥ पूर्णाहु-
त्यांमृडोनामक्रोधाग्निश्चाभिचारके ॥ वश्यार्थेकामदोनामवनदाहेतुदूषकः ॥ कुक्षौतुजाठरोज्ञेयःक्रव्यादोमृतदाहके ॥ वन्हिनामालक्षहोमेकोटि
होमेहुताशनः ॥ वृषोत्सर्गेध्वरोनामशकुनयेब्राह्मणःस्मृतः ॥ समुद्रेवाडवोह्यग्निःक्षयेसंवर्तकस्तथा ॥ ब्रह्मावैगार्हपत्यश्चईश्वरोदक्षिणस्तथा ॥

विष्णुराहवनीयःस्याद्ब्रह्मा होत्रेत्रयोऽग्नयः॥ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत्॥स्मृत्यर्थसारे॥बहुशुष्केंधनेचाग्नौसुसमिद्धेविधूमके॥सांगारेले-
लिहानेचहोतव्यंनान्यथाक्वचित्॥स्रुक्स्रुवादिप्रकृतिवृक्षाःस्मृत्यर्थसारे॥जुहूःपालाश्युपभृदाश्वत्थीवैकंकतीध्रुवा॥यद्वासर्वाःस्रुचःकार्याएते
षामन्यवृक्षजाः॥शमीमय्यःस्रुचःकार्याःसर्वावाभूर्जवृक्षजाः॥तदलाभेयथालाभमन्ययज्ञियवृक्षजाः॥खादिरस्तुस्रुवःकार्यःशम्याप्राशित्र
मेक्षणे॥खादिरोमुसलःकार्यःपालाशःस्यादुलूखलः॥यद्वोभौवारुणौकार्यौतदभावेन्यवृक्षजौ॥स्रुवाद्यभावेतुसदृशंद्रव्यंप्रतिनिधीयते॥याव-
द्यावत्सुसदृशंतत्तद्बहिर्गृह्यते॥संग्रहे॥प्रशस्तोपूर्णपात्रार्थेदारुकांस्यमयोमखे॥खादिरेणस्रुवःकार्यःपालाशेनजुहूर्भवेत्॥तत्प्रदेशाद्विलौ
स्यातामन्यैर्वायज्ञियैर्द्रुमैः॥तदभावेपलाशस्यपर्णाभ्यांहूयतेहविः॥पलाशपर्णाभावेतुपर्णैर्वापिप्पलोद्भवैः॥पर्णमत्रमध्यमम्॥मध्यमेनपर्णेनजु
होतीतिश्रुतेः॥चमसंवाप्रणीतायाःकांस्यपात्रमथापिवा॥घटनाप्रकारःसंग्रहे॥आयामंपंचधाकृत्वाद्विभागंपात्रमुच्यते॥त्रिभागंदंडमित्याहुरेत
दायामलक्षणं॥पात्रायामार्धतःपात्रविस्तारश्चतदर्धतः॥ग्रीवाविस्तारस्तस्यान्तूर्याद्विलस्योच्छ्रायइष्यते॥विस्ताराद्विगुणंपात्रंग्रीवाविस्तारमर्धतः॥अ
न्यानितुलक्षणानिविस्तरभयेननोक्तानि॥तथा॥काम्येप्रतिनिधिर्नास्तिनित्यनैमित्तिकेचसः॥काम्येप्युपक्रमादूर्ध्वमन्येप्रतिनिधिंविदुः॥नस्यात्
प्रतिनिधिर्मंत्रस्वामिदेवाग्निकर्मसु॥सदेशकालयोर्नास्तिनारणेरग्निरेवसा॥नाभावस्यप्रतिनिधिरभावांतरमिष्यते॥नापिप्रतिनिधातव्यंनिषिद्धंव
स्तुकुत्रचित्॥इत्यादि॥तथा॥स्वकालादुत्तरोगौणःकालःसर्वस्यकर्मणः॥कुशदर्व्यादयोमंत्राब्राह्मणाश्चबहुश्रुताः॥नतेनिर्माल्यतांयांतिविनि-

योज्याः पुनः पुनः ॥ कुशाः षट्सु तु निर्माल्याद्व्यां ग्रा आभिचारिके ॥ मंत्रास्तत्र च शूद्रार्थे ब्राह्मणाः प्रेतभोजिनः ॥ षट्सु तर्पणश्राद्धासनभोजनमूत्रपुरीष-
कालधारणेषु ॥ तत्राभिचारिके ॥ कृतं विहितं कर्म विष्ण्वर्पणं कार्यं ॥ तथा च बृहन्नारदीये ॥ विष्ण्वर्पितानि कर्माणि सफलानि भवंति हि ॥ अनर्पितानि क-
र्माणि भस्मनि न्यस्तहव्यवत् ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनं ॥ विष्णोः समर्पितं सर्वं सात्त्विकं सफलं भवेत् ॥ भगवद्गीतायां ॥ यत्करोषि य-
दश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति ॥ विहितमिति शेषः ॥ इत्यादि एवमन्या अपि परिभाषा ज्ञेयाः ॥ इति श्रीभ-
ट्टरामेश्वरसूरिसूनुनारायणभट्टकृते प्रयोगरत्ने परिभाषाप्रकरणं ॥ ॥ अथ गर्भाधानाद्याः संस्कारा उच्यंते ॥ तत्र प्रथमे रजोदर्शने मासादौ दुष्टेऽस-
ति गर्भाधानस्य शांतिपूर्वकं कर्तव्यत्वाच्छांतिकं वक्तुं दुष्टकालाद्युच्यंते ॥ प्रथमे रजसि चैत्रो ज्येष्ठ आषाढ भाद्रपद कार्तिक पौषा अशुभाः ॥ आश्विनो मध्य-
मः ॥ शेषाः शुभाः ॥ क्वचिद्वैशाखफाल्गुनयोरधमत्वमुक्तं ॥ तिथिषु प्रतिपच्चतुर्थी षष्ठ्यष्टमी द्वादशी चतुर्दशी पौर्णमास्यमावास्या अशुभाः ॥ शेषाः-
शुभाः ॥ क्वचित्सप्तम्येकादश्यावशुभे अष्टमीद्वादश्यौ शुभे इत्युक्तं ॥ आसां शुभाशुभत्वाभ्यां मध्यमत्वमिति सांप्रदायिकाः ॥ वारेषु रविभौममंद-
वारा अशुभाः ॥ अन्ये शुभाः ॥ केचित्सोमोऽप्यशुभ उक्तः ॥ नक्षत्रेषु भरण्यार्द्रापुष्याश्लेषापूर्वाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदारेवत्योऽशुभाः ॥ चि-
त्राविशाखाश्रवणाश्विनीमघास्वातयो मध्यमाः ॥ अन्यानि शुभानि ॥ केचित्तु कृत्तिकापुनर्वस्वनुराधारेवत्योऽप्यशुभा उक्ताः ॥ एवं च तासां मध्यमत्व-
एवमन्यत्रापि योगेषु ॥ व्याघातस्याद्या नव नाड्यो गंडातिगंडयोः षट् षट् शूलस्य पञ्च दश परिघपूर्वार्धं वैधृतिव्यतीपातश्चेत्यशुभाः ॥ वज्रं मध्यमं अ-

न्येशुभाः ॥ करणानिविष्टिंविनासर्वाणिशुभानि अन्हित्रेधाविभक्तेआद्योभागःशुभः ॥ द्वितीयोमध्यमः ॥ तृतीयःअशुभः ॥ एवंरात्रौ ॥ सूर्योदया
स्तमयावप्यशुभौ ॥ रविसंक्रमणादूर्ध्वोनाडीचतुष्टयमूर्ध्वेचाप्यशुभं ॥ संक्रांत्यादिदग्धदिनेष्वशुभं ॥ रविचंद्रोपरागयोरप्यशुभं ॥ संध्योपप्लवशावा-
शौचेषु भर्तुरात्मनश्चतुर्थाष्टमद्वादशस्थेचंद्रेजीर्णरक्तनीलमलिनकृष्णवस्त्रेषुपरिहितेषुनशुभम् ॥ संमार्जनीकाष्ठमृत्तृणाग्निशूर्पतुषशुष्काश्मन
लोहपाषाणशस्त्रादियारिण्याएतैर्युक्तदेशेचाशुभं ॥ देहलीस्थानरथ्यापितृमातृगृहेष्वशुभं ॥ ऊर्ध्वस्थितायानिद्रितायाश्चाशुभं ॥ पित्रादिसखि
स्वभर्तृभिर्दृष्टमशुभं ॥ शय्यादौशुभंइत्यादिज्ञेयं ॥ दुष्टमासादौप्रथमरजोदर्शनेतांबूलभक्षणादिमंगलाचारंनकुर्यात् ॥ द्वितीयेतुशुभेनत्रकुर्या-
दितिकेचित् ॥ प्रथमेदुष्टेरजोदर्शनेद्वितीयंप्रतीक्ष्यतस्मिन्नप्यशुभेविस्तरेणशांतिंकुर्यादित्यपिकेचित् ॥ प्रथमएवयथाशक्तिशांतिंचरेदित्यपरे ॥ त
त्रैकस्मिन्नप्यशुभेवक्ष्यमाणाशांतिःकार्या ॥ द्व्याद्यशुभसन्निपातेतुतत्सूचितैबह्वशुभनिरासार्थंवक्ष्यमाणाहुतिसंख्यादिविघ्नेज्याकार्या ॥ य-
थाशक्तीत्यादिज्ञेयम् ॥ ॥ इतिशुभाशुभविचारः ॥ ॥ अथशांतिरुच्यते ॥ तत्रएवंविनायकपूज्यग्रहांश्चैवविधानतः ॥ कर्मणांफलमाप्नोतीति
याज्ञवल्क्येनकर्मफलसिद्ध्यर्थंविघ्नार्थत्वेनग्रहयज्ञस्यावश्यकत्वोक्तेरिहचशौनकेन ॥ आर्तवानांतुनारीणांशांतिंवक्ष्यामिशौनक इत्युपक्रम्यग्रहातिथ्य
पुरः सरमित्निप्रकरणोक्तेरावश्यकत्वादेकदेशकालकर्तृकाणांचविशेषवचनाभावेतंत्रेणकर्तव्यत्वाद्ग्रहमखपूर्वकस्तंत्रेणशांतिप्रयोगउच्यते ॥
रजोदर्शनानंतरंपंचमादिदिनेनंक्षत्रताराद्यनुकूल्येशुचिदेशेकृतस्नानयापत्न्यायुतःपतिःप्राङ्मुखउपविश्यप्राणानायम्यदेशकालौस्मृत्वाममपत्न्याः

ग्र·र·
३३

प्रथमरजोदर्शनेःसुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखंशौनकोक्तांशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनपु
ण्याहवाचनगौर्यादिषोडशमातृकापूजनब्राह्म्यादिसप्तमातृकापूजननांदीश्राद्धानिकृत्वाशांतंदांतंकुटुंबिनंमंत्रतंत्रज्ञमाचार्यंब्रह्माणंचजपहोमार्थमष्टौषड्
चतुरोवाऋत्विजोपिवृत्वागंधादिनापूजयेत् ॥ ततआचार्योगृहेईशानदेशेशुचौमहीद्यौरितिभूमिंस्पृष्ट्वातद्दक्षिणोत्तरयोश्चतथैवभूमिंस्पृष्ट्वाओषध
यःसंवदंतइतिद्रोणप्रमाणव्रीहिभिर्मध्येतद्दक्षिणोत्तरतश्चस्पृष्टदेशेमंत्रावृत्त्याराशित्रयंकृत्वातेनैवक्रमेणराशित्रयेनवमकालकमभग्नंकुंभत्रयमाक
लशेषितिमंत्रावृत्त्यास्थापयेत् ॥ एवंसर्वत्रमंत्रावृत्तिः ॥ ततःप्रसुवआपइतिनव[illegible]र्चस्यसूक्तस्यसिंधुक्षितुप्रैयमेधोनद्योजगती ॥ कलशेषूदकपू
रणेविनियोगः ॥ ॐ प्रसुवआपइत्यादिऋक् ॥ ९ ॥ याःप्रवतइतिवसिष्ठोनद्यःशक्करी ॥ विनियोगःप्राग्वत् ॥ एवमग्रेपितत्रतत्रविनियोगोज्ञेयः
गंधद्वारामितित्रिष्वपिगंधंप्रक्षिप्य ॥ याओषधीरितिसर्वौषधीः ॥ ओषधयःसमितियवान्क्षिपेत् ॥ ततोमध्यकुंभेयवव्रीहितिलमाषप्रियंगुश्या
माकमुद्गान्क्षिप्त्वागायत्र्योदुंबरकुशदूर्वारक्तोत्पलचंपकबिल्वविष्णुक्रांतातुलसीबर्हिषशंखपुष्पीशतावर्य[illegible]श्वगंधानिर्गुंडीरक्तपीतसर्षप-
अपामार्गपलाशपनसजीरकप्रियंगुगोधूमव्रीहि[illegible]श्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभद्रमुस्तकाख्यानिद्वा-
त्रिंशदौषधानिसर्वाणियथासंभवंवाक्षिपेत् ॥ ततस्त्रिषुकलशेषुकांडात्कांडादितिदूर्वाः ॥ अश्वत्थेवइतिपंचपल्लवान् ॥ अश्वत्थोदुंबरप्लक्षचू
तन्यग्रोधपल्लवाः ॥ गजाश्वस्थानरथ्यावल्मीकसंगमह्रदगोष्ठस्थांमृदः [illegible]स्योनापृथिवीतिक्षिप्त्वा ॥ याःफलिनीरितिपूगीफलानि ॥ सहिर-

ग·था·
३३

त्नानीतिकनककुलिशनीलपद्मरागमौक्तिकानिपंचरत्नानि ॥ हिरण्यरूपइतिहिरण्यंचक्षिपेत् ॥ युवासुवासाइतिसूत्रेणवाससाचकलशकंठा
न्वेष्टयित्वागंधाक्षतपुष्पमालाभिः कलशान्भूषयेत् ॥ ततःकलशत्रयोपरितेनैवक्रमेणसौवर्णराजतकांस्यमयंताम्रमयंवैणवंमृन्मयंवायथावा-
दिपूरितंपात्रत्रयंपूर्णाद्दर्वीतिनिधायतदुपरिश्वेतंवस्त्रत्रयंन्यस्यतत्रचंदनादिनाष्टदलानिकुर्यात् ॥ तत्रमध्यमे ॥ गायत्र्याविश्वामित्रोभुवनेश्व
रीगायत्री ॥ भुवनेश्वर्यावाहनादौविनियोगः ॥ ॐ तत्सवि॰ भुवनेश्वरीमावाहयामीतियथाशक्तिसुवर्णनिर्मितांभुवनेश्वरीप्रतिमासम्युत्तारण-
पूर्वकंस्थापयेत् ॥ तद्दक्षिणकुंभोपरिवस्त्रे ॥ इंद्राणीवृषाकपिरिंद्राणीपङ्क्तिः ॥ इंद्राण्यावाहनादौविनियोगः ॥ ॐ इंद्राणीमासुनारिषु॰ इंद्राणी
मावाहयामीतितथैवसौवर्णीमिंद्राणीप्रतिमांसंस्थाप्योत्तरकलशोपरि ॥ इंद्रेत्वाविश्वामित्रइंद्रोगायत्री ॥ इंद्रावाहनेविनि॰ ॥ ॐ इंद्रत्वावृषभंवयं॰ इं
द्रमावाहयामीतिसौवर्णीमिंद्रप्रतिमांस्थापयेत् ॥ ततउक्तमंत्रैरुक्तक्रमेणदेवतात्रयस्यकांडानुसमयेनषोडशोपचारैःपूजांकुर्यात् ॥ ततोमध्यकुं
भेआचार्योऽष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् ॥ यथा ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यकर्दमानंदचिक्लीतेंदिरासुताऋष
यः ॥ श्रीर्देवता ॥ आद्यास्तिस्रोनुष्टुभः ॥ ततएकाप्रस्तारपंक्तिः ॥ ततोद्वेत्रिष्टुभौ ततोष्टावनुष्टुभोंत्याप्रस्तारपङ्क्तिः ॥ जपेविनि॰ ॥ ॐ हिरण्यव-
र्णामित्यादि ॥ ततएकोऋत्विग्दक्षिणकुंभेरुद्रसूक्तानिजपेत् ॥ यथा ॥ कद्रुद्रायेतिनव[illegible]र्चस्यसूक्तस्यघोरःकण्वोरुद्रोगायत्री ॥ जपेविनि॰
इमारुद्रायतवसेत्येकादशर्चस्यकुत्सोरुद्रआद्यानवजगत्योंत्येद्वेत्रिष्टुभौ ॥ जपेवि॰ ॥ आतेपितरितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ ज

पेवि॰ ॥ इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रस्तिस्रोजगत्योंत्यात्रिष्टुप् ॥ जपेवि॰ ॥ आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् ॥ जपेवि॰ ॥ त
मुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् ॥ जपेवि॰ ॥ भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् ॥ जपेवि॰ ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ जपेवि॰ ॥ अथान्यक्रूलि-
गुत्तरकुंभेएकादशावृत्तिभीरुद्रंजपेत् ॥ तत्रादौन्यासानुक्त्वाऋष्यादिस्मरेत् ॥ तथानमकानांप्रथमानुवाकेआद्यायाःकश्यपोद्वितीयायाआत्रे
यः तृतीयायाःकश्यपस्ततोद्वयोर्गौतमस्ततएकस्याःकण्वस्ततोद्वयोर्मरुत्वांस्ततएकस्याभगवांस्ततस्तिसृणांनारदस्ततस्तिसृणांभगवान् ॥
द्वितीयानुवाकस्यमंडुकस्तृतीयानुवाकस्यभगवांश्चतुर्थानुवाकस्यदुर्वासाः पंचमषष्ठानुवाकयोर्भगवान्सप्तमानुवाकस्यहेमकोशोऽष्टमानुवा
कस्यनवमानुवाकेच्चैनमोवइतियावद्भगवानवशिष्टस्याग्निर्दशमानुवाकेप्रथमस्यपुलहोद्वितीयस्यस्कंदस्ततोद्वयोर्मांडव्यस्ततएकस्यदेवरातस्तत
एकस्यभगवांस्ततएकस्यात्रिस्ततएकस्यवैय्याघ्रस्ततएकस्यभगवांस्ततएकस्यवैराजस्ततएकस्यपुलहस्ततएकस्यनारदस्ततएकादशानु-
वाकेआद्यानांचतुर्णांदुर्वासास्ततआसमाप्तिदेवलइत्यृषयः ॥ प्रथमानुवाकेआद्यस्यरुद्रस्ततएकस्यशंभुस्ततएकस्यस्कंदात्मारुद्रस्ततोद्व
योरुद्रस्ततएकस्यशंभुस्ततोद्वयोरादित्यात्मारुद्रस्ततएकस्यशंभुस्ततस्तिसृणांरुद्रस्ततस्तिसृणांभगवांस्ततोद्वितीयतृतीयानुवाकयो
रुद्रस्ततश्चतुर्थपंचमषष्ठानुवाकानांशंभुःसप्तमानुवाकस्यरुद्रोष्टमानुवाकस्यनमोवःकिरिकेभ्यइत्यंतस्यचनवमस्यभगवानवशिष्टस्यरुद्रो
दशमानुवाकेचतुर्णांरुद्रस्ततएकस्यनंदीश्वरात्मारुद्रस्ततएकस्यभगवांस्ततएकस्यशंभुस्ततएकस्यरुद्रस्ततएकस्यभगवांस्ततोद्वयोःशंभु-

स्ततो वशिष्ठानां रुद्र इति देवताः ॥ प्रथमानुवाके आद्येनुष्टुभौ तत एका स्वराळनुष्टुप् तत एका निचृदनुष्टुप् ॥ तत एकानुष्टुप् तत एका निचृदनुष्टुप् ॥
तत एका प्रस्तारपङ्क्तिः पंचपदा पङ्क्तिर्वा तत एका षट्पदा जगती ततः सप्तानुष्टुभस्ततो ऽष्टानुवाका यजूंषि तत एका प्रस्तारपङ्क्तिः पंचपदा पङ्क्तिर्वा
तत एकानुष्टुप् ॥ ततश्चतस्रो जगत्यस्ततस्तिस्रस्त्रिष्टुभस्तत एका पंचपदा त्रिष्टुप् महाबृहती वा ततो द्वादशानुष्टुभस्ततस्त्रीणि यजूंषि तत-
स्तिस्रो ऽनुष्टुभस्तत एका यजुरिति छंदांसि ॥ अथ चमकानां अग्निः कांडऋषिः आद्या आग्नावैष्णवी गायत्री शिष्टानां वाजादयो ऽन्नादिविशेषा देव
ताः यजुः जपे विनियोगः ॥ एवं रुद्रं जप्त्वा ॥ शंन इंद्राग्नी इति सूक्तं जपेत् ॥ शंन इति पंचदशर्चस्यास्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् ॥ जपे वि°
ततः कुंभपश्चिमदेशे स्थंडिले ऽग्निं प्रतिष्ठाप्य तदीशान्यां वेद्यादौ नवग्रहादींस्तत्तन्मंत्रैरावाह्य षोडशोपचारैः संपूज्य तदीशान्यां प्रागवत्कुंभं संस्था
प्य तत्र वरुणमावाह्याग्निसमीपमेत्यान्वाधानं कुर्यात् ॥ यथा इह समिधावादाय देवतापरिग्रहार्थमन्वाधानं करिष्ये ऽस्मिन्नन्वाहिते ऽग्नावित्यादि चक्षु
षी आज्येनेत्यंतमुक्त्वा नवग्रहान् प्रत्येकममुकसंख्याभिः समित्तिलाज्याहुतिभिर्भुवनेश्वरीं प्रत्येकममुकसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभि
रिंद्राणीमिंद्रं च प्रत्येकममुकसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभिरित्युक्त्वा शेषेण स्विष्टकृतमित्यादि यक्ष्य इत्युक्त्वा जुहुयात् ॥ अन्ये तु ॥ गा
यत्र्यैव तु होतव्यं हविरत्र चतुष्टयं ॥ ततः स्विष्टकृतं हुत्वेति शौनकेनेंद्राणींद्रयोर्होमानभिधानात्तयोर्होमो नास्तीत्याहुः ॥ तन्मते ऽन्वाधाने तत्कीर्तनाभावः ॥ आहु
तिसंख्या वक्ष्यते ॥ ततः परिस्तरणादि पूर्णपात्रनिधानांतं कृत्वा भुवनेश्वरींद्राणींद्रेभ्यो ऽमुष्येलेति मनसा ध्यायंस्तूष्णीं चतुरश्चतुरो मुष्टीन्निरुप्याहुतिबहुत्वाच्चानिरूप्य गोडु

ग्र०र०
३५

ग्रेपायसंश्रपयित्वाज्यसंस्काराद्याज्यभागांतंकुर्यात् ॥ ततोयजमानोदक्षिणतउपविश्य होमार्थंचजपार्थंचवरयेदृत्विजोबहून् ॥ आचार्योद्विजैःसहेतिचो-
क्तेराचार्यर्त्विजांहोमावगमात्तेषांचास्त्व[illegible]लेनत्यागायोगात्तेश्चक्रियमाणे होमेयजमानेनप्रत्याहुतित्यागस्याशक्यत्वात्तदानीमेवांगप्रधानदेवताउद्दि-
श्यएताभ्यइदंनममेतित्यजेत् ॥ ततःआचार्यःस[illegible]र्त्विक्नवग्रहेभ्यो ऽष्टशताष्टाविंशत्यष्टान्यतमसंख्याकाघृताक्ताअर्कादिसमिधस्तिलाज्याहुती
श्चहुत्वाधिदेवताप्रत्यधिदेवताविनायकादिपंचलोकपालेभ्यस्तन्न्यूनसंख्ययाजुहुयात् ॥ एभ्यस्तुपालाश्यःसमिधः ॥ ग्रहाणांयदाष्टौतदान्येभ्यश्चत
स्रइतिसंप्रदायः ॥ ततोभुवनेश्वर्यैगायत्र्यादधिमधुघृताक्ताभिस्तिसृभिर्दूर्वाभिरेकाहुतिरित्येवमष्टसहस्रमष्टशतंवादूर्वाहुतीर्घृताक्तैस्तिलमिश्रगो
धूमाहुतीःपायसाहुतीर्घृताहुतीश्चजुहुयात् ॥ एवमिंद्राणींद्रयोः प्रागुक्तमंत्राभ्यांक्रमेणहविश्चतुष्टयं प्रत्येकमष्टशतसंख्ययाभुवनेश्वर्याअष्टस
हस्रपक्षेजुहुयात् ॥ तस्याष्टशतपक्षेतुतयोरष्टाविंशतिरितिसंप्रदायः ॥ पक्षेतुतयोर्नहोमः ॥ ततःस्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वा इंद्रादि
दिक्पालेभ्योनवग्रहेभ्योभुवनेश्वरींद्राणींद्रेभ्यःक्षेत्रपालायचसदीपान्माषभक्तबलींस्तत्तन्मंत्रैर्दत्वापूर्णाहुतिंसमुद्रादूर्मिरितितृचेनजुहुयात् ॥
समुद्रादूर्मिरितितृचस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अंत्यैकाजगती ॥ पूर्णाहुतिहोमेविनि० ॥ ॐ समुद्रादूर्मिर्म० ॥ ततःप्रणीताविमोकंकृत्वा
भुवनेश्वर्यादिकलशोदकंग्रहकलशोदकंचपात्रांतरेगृहीत्वानेनतत्स्थपंचपल्लवैःसकुशदूर्वैर्धृतनववस्त्रंयजमानंधृतनववस्त्रकंचुकींचतद्वामस्थां
ऋतुमतींस[illegible]र्त्विग्गुदङ्मुखआचार्योभिषिंचेदेभिर्मंत्रैः ॥ तेचमंत्राः ॥ आपोहिष्ठेतितव[illegible]र्चस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्धमा

अ

ग०धा०
३५

प्रागाभो

नासप्तमीप्रतिष्ठा ॥ अंत्येद्वे अनुष्टुभौ ॥ अभिषेकेविनियो० ॥ यएकइद्धिद्यनइतिगोतमोराहूगणइंद्रउष्णिक् ॥ अभिषेकेविनि० ॥ त्रिभिष्ट्वंदेवेतिस
प्तर्चस्यसूक्तस्यवसिष्ठ आद्यानात्रेयाणामग्निस्ततश्चतुर्णांविश्वेदेवाआद्यागायत्री द्वितीयानुष्टुप् ततस्तिस्रोगायत्र्योंत्येद्वे अनुष्टुभौ ॥ अभिषेके०
उभयंशृणवच्चनइतिभार्गवइंद्रोबृहती ॥ अभिषे० ॥ स्वस्तिदाविशोभरद्वाजइंद्रोनुष्टुप् ॥ अभिषेकेवि० ॥ त्र्यंबकमितिवसिष्ठोरुद्रोनुष्टुप् ॥ अभिषे०
जातवेदसेकश्यपोदुर्गात्रिष्टुप् ॥ अभिषे० ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठ आपस्त्रिष्टुप् ॥ अभिषेकेवि० ॥ आयंनामितितिसृणांसप्तऋषयआ
पोनुष्टुप् ॥ अभिषे० ॥ इमाआपइतितिसृणांसप्तऋषय आपोनुष्टुप् ॥ अभिषेकेवि० ॥ देवस्यत्वेत्यापस्तंबशाखागतैस्त्रिभिर्मंत्रैः ॥ तमीशानंगो
तमोवामदेवईशानोजगती ॥ अभिषे० ॥ त्वमग्नेरुद्रइत्यापस्तंबशाखागतेनैकेन ॥ तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् ॥ अभिषेकेवि० ॥ भुवनस्यपि-
तरंऋजिश्वारुद्रस्त्रिष्टुप् ॥ अभिषे० ॥ यातेरुद्रेतिकश्यपोरुद्रस्वराळनुष्टुप् ॥ अभिषे० ॥ यज्जाग्रतइतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्म
नस्त्रिष्टुप् ॥ अभिषेकेवि० ॥ इंद्रंत्वावृषभंवयमितिपंचानांविश्वामित्रइंद्रोगायत्री ॥ अभिषे० ॥ ततःसुरास्त्वामभिषिंचंत्वितिपौराणैर्मंत्रैर
भिषिंचेत् ॥ ततःकलशोदकेनान्येनचोदकेनस्नातोदंपतीशुक्लवाससौगंधमाल्यादियुक्तोपविशेतां तत्रपत्नीदक्षिणतः ततोयजमानोग्निं
संपूज्यविभूतिंधृत्वाचार्यादीन्गंधपुष्पवस्त्रालंकारादिभिर्यथाशक्तिपूजयित्वाचार्यायधेनुंदक्षिणांदद्यात् ॥ दक्षिणात्वेनचास्यानदक्षिणां-
तरं अनवस्थाप्रसंगात् ॥ ततोब्राह्मणेयथाशक्तिदक्षिणांदत्वारुद्रजापिनेसदक्षिणमनड्वाहंदक्षिणांदद्यात् ॥ अत्रधेनुन्यायेनदक्षिणात्वेप्राप्तेस

दक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिनेइतिमनिप्रसवकारणात्सदक्षिणत्वं ॥ ततोऽन्येभ्यऋत्विग्भ्योऽन्येभ्यश्चब्राह्मणेभ्यश्चभूयसींदक्षिणांदद्यात् ॥ ततो
ग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्तरपूजांपंचोपचारैः कृत्वाक्षमाप्ययांतुदेवगणाइतिविसृज्यआचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छगच्छसुर-
श्रेष्ठेतिविसर्जयेत् ॥ ततोब्राह्मणामहाशांतिंपठेयुः ॥ सायथा ॥ आनोभद्राइतिदशानांगौतमोराहूगणोविश्वेदेवाः ॥ आद्याःपंचजगत्यः ॥ ष
ष्ठीविराट् ॥ सप्तमीजगती ॥ ततस्तिस्रस्त्रिष्टुभः ॥ ॐ आनोभद्राः० ॥ स्वस्तिनोमिमीतामितिपंचानांस्वस्त्यात्रेयोविश्वेदेवाः ॥ आद्यास्तिस्र
स्त्रिष्टुभः ॥ ततोनुष्टुभौ ॥ ओं स्वस्तिनोमिमीता० ॥ शंनइंद्राग्नीतिपंचदशानांवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ त्यमूषितितिसृणांतार्क्ष्योरिष्टनेमि-
स्तार्क्ष्यस्त्रिष्टुप् ॥ तच्छंयोःशंयुर्विश्वेदेवाःशक्वरी ॥ सर्वेषांशांतिपाठेवि० ॥ ततोयजमानोनवग्रहप्रीत्यर्थंत्रीन्भुवनेश्वरींद्राणींद्रप्रीतयेचप्रत्येकं
त्रींस्त्रीन्ब्राह्मणान्भोजयित्वासंकल्प्यवाविप्राशिषोगृहीत्वाऽऽकृतदृष्टयुक्तोभुंजीत ॥ एवंकृतेसर्वारिष्टशांतिर्भवति ॥ ततःशुभकालेगर्भाधानं-
कुर्यात् ॥ ॥ इतिदुष्टरजोदर्शनशांतिः ॥ ॥ अथचंद्रसूर्योपरागकालेप्रथमरजोदर्शनेशांतिविशेषउच्यते ॥ सचोपरागस्यपौर्णमास्यमा-
वास्याभ्यामविनाभावात्तदतिरिक्तवारादौदुष्टेप्रागुक्तशांत्यासमुच्चीयतेनिमित्तभेदात् ॥ अदृष्टार्थत्वाच्च ॥ प्रत्यक्षविध्यभावेनतत्कार्यकारि
त्वान्नवग्रहमेनामनहोमैर्नारिष्टहोमानामिवानयातन्निवृत्तिनियोगात् ॥ ग्रहणमात्रेत्वियमेव ॥ अत्रपुनस्त्वश्रवणाभावान्नवग्रहमखःकृताकृतइतिविवे
कः ॥ अत्रकेवलायाःप्रयोगः ॥ पूर्वोक्तकालेसस्त्रीकः ॥ शुचिःप्राङ्मुखउपविश्यप्राणानायम्यदेशकालौस्मृत्वाममपत्न्याश्चंद्रोपरागेप्रथमर-

जोदर्शनसूचितारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिंकरिष्येइतिसंकल्प्यप्राग्वद्दत्विक्पूजांकुर्यात् ॥ नवग्रहमखेसनवग्रहमिति सूर्योपरा
गेतुसूर्योपरागेप्रथमेत्यादिवदेत् ॥ ततः आचार्यः शुचिदेशेगोमयेनोपलिप्यतत्रपंचवर्णरजोभिरष्टदलंपद्मंकृत्वातदुपरिनवंश्वेतवस्त्रंउदग्दशं
स्थाप्ययथाशक्तिरजतनिर्मितांचंद्रप्रतिमामाप्यायस्वगोतमःसोमोगायत्री ॥ चंद्रावाहनेवि० ॥ ॐ आप्यायस्वस० ॥ चंद्रमावाहयामीतिस्थाप
येत् ॥ सूर्यग्रहेतुयथाशक्तिसुवर्णनिर्मितप्रतिमामाकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् ॥ सूर्यावाह० ॥ ॐ आकृष्णेनरजसेति सूर्यमावाह
यामीतिस्थापयेत् ॥ ततोयथाशक्तिसीसनिर्मितांस्वर्भानोरत्रीराहुरनुष्टुप् ॥ ॐ स्वर्भानोरधय० ॥ राहुमावाहयामीतितदुत्तरतःस्थापयेत् ॥ त
तोयस्मिन्नक्षत्रेग्रहणंतन्नक्षत्रदेवताप्रतिमांयथाशक्तिसुवर्णनिर्मितांतत्तन्मंत्रैर्नाममंत्रैर्वा ॥ ॐ अश्विनावावाहयामीतितत्पदुतिप्रणवादिनमोंतैः
स्थापयेत् ॥ मंत्रास्त्वापस्तंबानामष्टौवाक्यानीतिप्रसिद्धाः ॥ नामानितु ॥ अश्विनौयमः अग्निःप्रजापतिःसोमःरुद्रःअदितिःबृहस्पतिःसर्पाः
पितरःभगःअर्यमासवितात्वष्टावायुःइंद्राग्नीमित्रःइंद्रःनिर्ऋतिःआपःविश्वेदेवाःविष्णुःवसवःवरुणःअजैकपात् अहिर्बुध्न्यःपूषेति ॥ एवं
देवतात्रयमावाह्येभिरेवमंत्रैःकांडानुसमयेनषोडशोपचारैःपूजयेत् ॥ तत्रचंद्रग्रहेचंद्रायश्वेतानिवस्त्रगंधाक्षतमाल्यानिदेयानि ॥ सूर्यग्रहेतुसूर्या
यरक्तवस्त्ररक्तचंदनरक्ताक्षतकरवीरपुष्पाणिदेयानि ॥ राहवेकृष्णानि ॥ नक्षत्रदेवताभ्यःश्वेतानि ॥ ततःपश्चिमतोग्निंप्रतिष्ठाप्यपक्षेनवग्रहान
प्यावाहनपूर्वंसंपूज्यान्वाधानंकुर्यात् ॥ तद्यथा ॥ इंसमिधौगृहीत्वाचक्षुषीआज्येनेत्यंतमुक्त्वापक्षेपूर्ववन्नवग्रहानुद्दिश्यापश्चतासमिधंशत्य-

न्यतमसंख्यामुद्दिश्यचंद्रममुकसंख्याभिः पालाशसमिदाज्यचरुतिलाहुतिभिः राहुं अमुकसंख्याभिर्दूर्वाज्यचरुतिलाहुतिभिर्नक्षत्रदेवताममु
कसंख्यापालाशसमिदाज्यचरुतिलाहुतिभिर्यक्ष्येशेषेणेत्युक्त्वाजुहुयात् ॥ सूर्यग्रहे चंद्रस्थाने सूर्यममुकसंख्यार्कसमिदाज्यचरुतिलाहुति-
भिरितिवदेत् ॥ एवमन्वाधायप्रणीताप्रणयनांतंकृत्वाविभ्योमुष्मैत्वानिचतुरश्चतुरोमुष्टीन्निरूप्यचरुंश्रपयित्वाज्यभागांतंकुर्यात् ॥ ततोयजमा-
नोदक्षिणतोदेवताउद्दिश्यत्यजेत् ॥ ततोन्वाधानक्रमेणजुहुयुः ॥ तत्रतिसृणांदूर्वाणामेकैकाहुतिः ॥ समिधश्चत्रिमध्वाक्ताःकार्याः ततःस्विष्ट
कृतादि पूर्णाहुत्यंतंप्राग्वत् ॥ ततआचार्यएकस्मिन्कलशेजलपूर्णेपंचगव्यानिपंचरत्नानिवटाश्वत्थोदुंबराम्रबिल्वानांत्वचःपल्लवान्सर्वौषधिकल्कं
दूर्वाःकुशांश्चनिक्षिप्यसकृत्विग्दंपतीपूर्ववदभिषिंचेदेभिर्मंत्रैः ॥ आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीप आपोगायत्री ॥ अभिषेके वि० ॥ इमंमेगं
गेसिंधुक्षित्प्रैयमेधा आपोजगती ॥ अभिषेके० ॥ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ अभिषे० ॥ अन्येपिसमुद्रज्येष्ठाइत्यादयः ॥ सूक्तास्ते-
तिपौराणाश्च ॥ ततःस्नानंदक्षिणादानप्रतिमाप्रतिपादनादिपूर्ववत् ॥ यदातुपूर्वशांतिसमुच्चयःतदाकालैक्यानुकूल्यैक्याच्चाग्नेयादिवत्तंत्रप्रयोगः
तत्रयजमानोदेशकालौस्मृत्वाममास्याःपत्न्याःप्रथमरजोदर्शनेमुकदुष्टमासतिथ्यादिअमुकग्रहणसूचितेत्यादिसंकल्प्यर्त्विक्पूजांतंविदध्यात् ॥ त
त्रआचार्योभुवनेश्वर्यादिपूजांतःप्राक्पश्चाद्वाततउदीच्यांचंद्रादीन्संपूज्ययथोपक्रमंनिर्वापहोमाभिषेकान्कुर्यादितिविशेषः ॥ अन्यत्सर्वंसमानं
इतिग्रहणरजोदर्शनशांतिः ॥ ॥ इतिश्रीविद्वन्मुकुटमाणिक्यश्रीमद्रामेश्वरभट्टसूनुनारायणभट्टकृतेप्रयोगरत्नेस्मज्ज्येष्ठसूनुरामकृष्णोन्नीताद्दु

ष्टरजोदर्शनशांतिः समाप्ता ॥ ॥ अथगर्भालंबनाख्यंगर्भाधानं ॥ ॥ रजोदर्शनात्षोडशाहोरात्राणिऋतुस्तन्मध्येआद्यंरात्रिचतुष्कंपर्वादिनिषिद्ध-
दिनानिचवर्जयित्वामघामूलादिव्यतिरिक्तेदैवज्ञोक्तेशुभकालेदंपत्योश्चंद्रेनुकूलेगर्भाधानंकार्यं ॥ तत्रापियुग्मासुरात्रिषुपुत्राः अयुग्मासुकन्याजायं-
तइत्यादिज्ञेयं ॥ अत्रायंक्रमः ॥ कर्ताप्रातरभ्यंगस्नानंकृत्वापत्नीमपिनवोदकुंभसलिलैः ससमृत्तिकापंचपल्लवपंचत्वक्सहितैः स्नापयित्वा तयास
हमंगलवस्त्राभरणादिधृत्वाचम्यस्वस्तिवाचनाभ्युदयिकेकृत्वोपासनाग्निंमारुतसंज्ञंप्रतिष्ठाप्यप्रज्वाल्यदेशकालौस्मृत्वाअस्याः ममभार्यायाः प्र
तिगर्भसंस्कारातिशयद्वारास्यांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानाख्यंकर्मकरिष्यइतिसंक
ल्प्यसमिद्द्वयमादायगर्भाधानंकर्तुंप्राजापत्यहोमंकरिष्येतत्रदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाप्रजापतिंचरुणाविष्णुंषड्वारमा
ज्येनप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिद्द्वयमग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाप्रजापतयेत्वाजु
ष्टंनिर्वपामीत्यादिआज्यभागांतंकृत्वाऽवदानधर्मेणावदाय ॐ प्रजापतयेस्वाहेतिचरुणैकाहुतिंहुत्वा ॥ विष्णुर्योनिमितिनिस्तृणांत्वष्टाविष्णुरनुष्टुप्
गर्भाधानप्रधानाज्यहोमेवि० ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुतेस्वाहा ॥ विष्णवइदं० ॥ ॐ गर्भं
धेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजास्वाहा ॥ विष्णवइदं० ॥ ॐ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥
तंतेगर्भंहवामहेदशमेमासिसूतवेस्वाहा ॥ विष्णवइदं० ॥ नेजमेषेतिनिस्तृणांत्वष्टाविष्णुरनुष्टुप् ॥ गर्भाधानप्रधानाज्यहोमेवि० ॥ ॐ नेजमेषप-

प्र॰र
३८

ग॰धा॰

रापतसुपुत्रःपुनरापत ॥ अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान्स्वाहा ॥ विष्णवइदं॰ ॥ ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥ एवंतंगर्भमाधे-
हिदशमेमासिसूतवेस्वाहा ॥ विष्णवइदं॰ ॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रानाधेहिदशमेमासिसूतवेस्वाहा ॥ विष्ण॰
प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ गर्भाधानप्रधानाज्यहो॰ ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तं
नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतयइदं॰ ॥ एवंसप्ताज्याहुतीर्हुत्वा ॥ अपनःशोशुचदघमित्यष्टर्चस्यसूक्तस्यकुत्सोग्निर्गायत्री ॥
पत्न्यामूर्धाभिमर्शनेवि॰ ॥ ॐ अपनःशोशुचदघमग्नेशुशुग्ध्यारयिं ॥ अपनःशोशुचदघं ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अपनः॰
प्रयद्भंदिष्ठएषांप्रास्माकासश्चसूरयः ॥ अपनःशो॰ ॥ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनः॰ ॥ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ॥ अप
नः॰ ॥ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि ॥ अपनःशो॰ ॥ द्विषोनोविश्वतोमुखातिनावेवपारय ॥ अपनः॰ ॥ सनःसिंधुमिवनावयातिपर्षास्वस्तये
अपनः॰ ॥ याःफलिनीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ जपेवि॰ ॥ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो
मुंचंत्वंहसः ॥ एतांजपित्वा ॥ वधेनदस्युमितिषण्णांवसुश्रुतोग्निस्त्रिष्टुप् ॥ अग्न्युपस्थानेवि॰ ॥ ॐ वधेनदस्युंप्रहिचातयस्ववयःकृण्वानस्तन्वे
स्वायै ॥ पिपर्षियत्सहसस्पुत्रदेवान्त्सोअग्नेपाहिनृतमवाजेअस्मान् ॥ वयंतेअग्नउक्थैर्विधेमवयंहव्यैःपावकभद्रशोचे ॥ अस्मेरयिंविश्ववारंसमि
न्वास्मेविश्वानिद्रविणानिधेहि ॥ अस्माकमग्नेअध्वरंजुषस्वसहसःसूनोत्रिषधस्थहव्यं ॥ वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि ॥

३८

विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि ॥ अग्ने अत्रिवन्नमसागृणानो ऽस्माकंबोध्यविनातनूनां ॥ यस्त्वात्हृदाकीरिणामन्यमानोमर्त्यं
मर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपुत्रिणं
वीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ अग्निस्तुविश्रवस्तममितिद्वयोर्वसूयवोग्निरनुष्टुप् ॥ अग्न्युपस्थानेवि० ॥ ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माण
मुत्तमं ॥ अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे ॥ अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः ॥ अग्निरत्यंरघुष्यदंजेतारमपराजितं ॥ इत्यष्टा-
भिरग्निमुपस्थायस्विष्टकृदादिहोममशेषंसमाप्य ॥ सूर्योनोदिवस्पात्वितिपंचर्चस्यसूक्तस्यचक्षुःसूर्योगायत्री ॥ सूर्योपस्थानेवि० ॥ ॐ सूर्यो
नोदिवस्पातुवातोअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यः ॥ जोषासवितर्यस्यतेहरःशतंसवांअर्हति ॥ पाहिनोदिद्युतःपतंत्याः ॥ चक्षुर्नोदेवःसवि-
ताचक्षुर्नउतपर्वतः ॥ चक्षुर्धातादधातुनः ॥ चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्येतनूभ्यः ॥ संचेदंविचपश्येम ॥ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य ॥
विपश्येमनृचक्षसः ॥ अनेनसपत्नीकःसूर्यमुपस्थायब्राह्मणान्भोजयित्वातेभ्यःस्वस्त्ययनपूर्वकमाशिषोगृहीत्वाभुंजीततत‌ःसायंकाले
नित्यकर्मकृत्वोभौशुक्लांबरानुलेपनमाल्याभरणादिभिरलंकृतौस्वलंकृतंसुधूपितंगंधमाल्यामलदीपयुक्तंगृहंप्रविशेतां ॥ ततोभर्ताभ
ग्नंजंतुवर्जितंसुखस्पर्शंवितानोपरिमंडितंमंचकमारुह्यमागुक्तशोभनेमुहूर्तेस्त्रियमारोप्याश्वगंधाकल्कंदूर्वाकल्कंवासूक्ष्मवस्त्रेनिक्षिप्य ॥
उदीर्ष्वातिद्वयोःसूर्यासावित्रीसूर्यासावित्रीआद्यात्रिष्टुबंत्याअनुष्टुप् ॥ भार्यायादक्षिणनासापुटेश्वगंधारससेचनेवि० ॥ ॐ उदीर्ष्वातःपति० ॐ

अन्यामिच्छपितृ॰न्हि॥उदीर्ष्वातोवि॰न्वा॥अन्यामिच्छप्रफर्व्यां १ संजायांपत्यासृजस्वाहेतिवामभागोपविष्टायाभार्यायादक्षिणनासाविलेस्थगंधादि
रसंसिक्त्वानद्सेरुदरंगनेनामाचमप्योपेयात् ॥ इदानींशिष्टानस्यदुत्वेवस्विष्टकृदादिहोमदोषंसमापयति॥ उपगमेचायंक्रमः॥गंधर्वस्यविश्वाव
सोमुखमसीतिमंत्रेणहोमोक्तकृष्यादिभिर्विष्णुर्योनिमितितिसृभिर्नेजमेषेतितिसृभिश्चत्रिरंगुलीभिर्योनिमभिमृश्य॥तांपूषन्नित्यस्यसूर्यासा
वित्रीवसूर्यासावित्रीत्रिष्टुप्॥जपेवि॰॥ॐतांपूषञ्छिवतमामेरयस्वयस्यांबीजंमनुष्या १ वपंति॥यानऊरूउशतीविश्रयातेयस्यामुशंतःप्रहराम
शेपं॥योगर्भमित्यस्यवसिष्ठःपर्जन्योगायत्री॥जपेवि॰॥ॐयोगर्भमोषधीनांगवांकृणोत्यर्वतां॥पर्जन्यःपुरुषीणां॥अहंगर्भमजावान्प्राजा
पत्योगर्भंइंद्रोदेवात्रिष्टुप्॥जपेवि॰॥अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः॥अहंप्रजाअजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान्॥
इतित्रीन्मंत्रान्जपित्वासकृदुपगच्छेत्॥ततःप्राणेरेतोदधाम्यसावित्यनुप्राण्ययथाभूमिरग्निगर्भायथाद्यौरिंद्रेणगर्भिणी॥वायुर्यथादिशांगर्भए
वंतेगर्भंदधाम्यसावितिस्त्रीहृदयमभिमृश्याचामेत्॥मंत्रद्वयेपि असावित्यस्यस्थानेप्रथमैकवचनांतंस्त्रीनामवदेत्॥ अस्मिन्कर्मणिशतंब्राह्म
णाभोज्याः॥ दशवार्षादिप्रथमरजोदर्शनंदुष्टतिथिवारनक्षत्रादिषुजायतेतद्दोषपरिहारायशौनकोक्तांशांतिंकृत्वाप्रशस्ततिथ्यादिषुऋतुदर्शनपर्यंतं
तस्यांगमनंवर्ज्यं॥तदाहज्योतिर्वसिष्ठः॥ प्रसूतदोषेयदिविद्यतेततपुष्यंततःशांतिककर्मकार्यं॥विवर्जयेदेवतयैकशय्यांयावद्रजोदर्शन-
मिष्टकालेइति॥एतत्कर्माकरणेप्रायश्चित्तमाहाचार्यः॥गर्भाधानस्याकरणात्तस्यांजातस्तुदुष्यति॥ अकृत्वागांद्विजेदत्वाकुर्यात्पुंसवनं

पतिरिति ॥ ॥ इतिश्रीभट्टरामेश्वरसूनुनारायणभट्टकृतेप्रयोगरत्नेगर्भाधानप्रयोगः ॥ ॥ अथपुंसवनानवलोभनयोःप्रयोगः ॥ गर्भमासप्र-
भृतितृतीयमासेगर्भाभिव्यक्तौतत्रानभिव्यक्तौतुचतुर्थेषष्ठेष्टमेवामासिअरिक्तादितिथौपुष्यादिपुंनक्षत्रेशुक्रसोमबुधगुरुवारेषुविष्ट्यादि
दोषरहितेदैवज्ञोक्तेकालेपुंसवनानवलोभनेकुर्यात् ॥ अत्रनियतकालत्वाद्गुरुशुक्रास्तबाल्यवार्धकमलमासादिष्वपिनदोषः ॥ दोषरहितका-
लालाभे ॥ तद्विहितविहितकाललाभेतुशुक्रास्ताद्दौनकार्ये ॥ सीमंतदिनेवाकार्ये ॥ एतेकरिष्यमाणःपतिःपूर्वेद्युःपुंसवनार्थंसमानरूपवत्सा
यागोस्तदलाभेऽन्यस्यावाक्षीरंदध्यर्थंपुष्टमाषषड्यवत्रयंचसंपाद्यइष्टान्नाकारमविरलच्छायमच्छावकाशंगृहेकंदूर्वांकृत्वाविधिवत्स्वस्तिवाच
नग्रहयज्ञाभ्युदयिकानिकृत्वागर्भाभिवृद्ध्यविरोधिहविष्याकृतैकभक्तांभार्यांकृत्वाब्रह्मचारीसन् परेद्युरनुकूलकालेमंगलस्नानांपरिहिताहतवा
ससंमाच्छन्नप्रावरणीयांभूषणभूषितांभार्यांपूर्वकृतदेशेस्वदक्षिणतउपवेश्यसद्योवाकृतस्वस्तिवाचनादिदेशकालौस्मृत्वा ॥ अस्यांभार्यायामुत्प-
त्स्यमानस्यगर्भस्यबैजिकगार्भिकदोषपरिहारपुंरूपताज्ञानोदयप्रतिरोधिपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंपुंसवनमनवलोभनंचतंत्रेणकरि-
ष्येइतिसंकल्प्य ॥ विधिवत्कौतुकसूत्रमाबध्यविधिवद्दौपासनाग्निंपवमानसंज्ञंप्रतिष्ठाप्याद्यक्रियमाणेपुंसवनानवलोभनहोमेदेवतापरिग्रहा-
र्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नाविध्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाप्रजापतिंचरुद्रव्येणशेषेणस्विष्टकृतमित्याद्युक्त्वान्वाधायपरि-
समूहनपरिस्तरणादिप्रणीताप्रणयनावधिप्राकृतंतंत्रंकृत्वाप्रजापतयेत्वाजुष्टंनिर्वपामीतिचतुरोव्रीहिमुष्टीन्निरूप्यप्रोक्षणावघातादिबर्हिषि

हविरासादनांतंकृत्वास्वदक्षिणतः प्रत्यग्ग्रीवमुत्तरलोमानडुहंचर्मास्तीर्य आत्मानमभिंचांतरांपत्नीमाचांतसलिलामानीयचर्मण्युपवेश्यतयान्वा-
रब्धइध्माधानाद्याज्यभागांतंकृत्वाप्रक्षालितेप्रसृती कृतेदक्षिणेपत्नीपाणौप्रसृतिमितंतण्डीदधिनिक्षिप्यतदुपरिलिंगवद्यवंतत्पार्श्वयोरंडद्वय-
वन्माषद्वयंनिधायकिंपिबसीतित्रिःपतिःपत्नीं पृच्छेत् ॥साचपुंसवनमितित्रिरुक्त्वासयवमाषंतद्दधिनिःशेषंपीत्वाजलमात्रस्यपुनरेवंद्विःप्र-
श्नप्रतिवचनपूर्वकंप्राश्याचामेत् ॥ एतत्पुंसवनं ॥ अनवलोभनंतु ॥ दूर्वाःकन्यया दृषदुपलेनपेषयित्वापिंडीकृत्यशुक्लवसनांचलेसंगृह्यप्रजा-
वदाख्यंजीवपुत्रसंज्ञकंचजपित्वामंडलागारच्छायायामुपविष्टायाःप्राङ्मुख्याःस्त्रियाःपश्चिमतस्तिष्ठन्पतिःतदाननमुन्नमय्यदक्षिणेनासा-
बिलेस्त्वांगुष्ठाग्रेणदूर्वारसमासिंचेत् ॥ तत्रप्रजावदाख्यसूक्तं ॥ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिं ॥ आवीरोजायतांपुत्रस्तेदशमास्यः
कृणोमितेप्राजापत्योमागर्भोयोनिमेतुते ॥ अनूनःपूर्णोजायतामश्लोणोपिशाचधीतः ॥ पुमांस्तेपुत्रोनारितंपुमाननुजायतां ॥ तानिभद्राणिबी-
जान्यृषभाजनयंतुनौ ॥ यानिभद्राणिबीजान्यृषभाजनयंतिनः ॥ तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव ॥ कामःसमृध्यतांमह्यमपराजितमेव-
मे ॥ यंकामंकामयेदेवतन्मेवायोसमर्धय ॥ अथजीवपुत्राख्यंसूक्तं ॥ अग्निरैतुप्रथमोदेवतानांसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तदयंराजा-
वरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् ॥ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्थाजीवतामस्तुमातापौ-
त्रमानंदमभिप्रबुध्यतामियं ॥ मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशंतु ॥ मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजप-

श्येनीप्रजांसुमनस्यमाना ॥ अप्रजस्त्वांपौत्रमृत्युंपाप्मानमुतवाघं ॥ शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपाशं ॥ देवकृतंब्राह्मणकल्पमानं
तेनहन्मियोनिषदःपिशाचान् ॥ क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तवजीवतुपुत्राः ॥ एतैर्दशभिर्मंत्रैर्नस्येदत्ते आचांतेजलयापत्न्यास्पृष्टः
प्राजापत्यचरू अवदानधर्मेणावदायप्रजापतयेस्वाहेत्येकाहुतिंहुत्वायत्तेसुशीमइतिमंत्रेणपत्न्याहृदयंपाणिनास्पृशेत् ॥ यत्तेसुशीमइतिमंत्रस्य
हिरण्यगर्भःप्रजापतिरनुष्टुप् ॥ भार्यायाहृदयालंबनेवि० ॥ ॐ यत्तेसुशीमेहृ० नौ ॥ मन्येहंमां० नियाम् ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्यशतंब्राह्मण
भोज्याः ॥ इदंकर्मगर्भसंस्कारत्वात्प्रतिगर्भंकार्यम् ॥ प्रथमगर्भएवेतिकेचित् ॥ अस्यकर्तापतिस्तदसंभवेदेवरोवा ॥ ॥ इतिश्रीरामेश्वर-
भट्टसुतनारायणभट्टकृतेपुंसवनानवलोभनप्रयोगः ॥ ॥ अथसीमंतोन्नयनं ॥ ॥ तच्चगर्भमासापेक्षयाचतुर्थेषष्ठेष्टमेवामासिअसंभ
वेवायावत्प्रसवंशुक्लपक्षेपुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपदानुराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगशिरःसंज्ञकानांपुन्नक्षत्राणांचतुर्थीवि-
भक्तानांमध्यमपादद्वयेषष्ठ्यष्टमीद्वादशीचतुर्थीनवमीचतुर्दशीअमावास्याव्यतिरिक्ततिथौसोमबुधबृहस्पतिशुक्रवारेषुचंद्रमानुकूल्येविष्ट्या
दिदोषाभावेशुभलग्नादौकार्यं ॥ अत्राप्यधिकमासगुरुशुक्रास्तादीनांनदोषः ॥ कालांतरसंभवेपूर्ववन्नियतकालत्वात् ॥ अथप्रयोगः ॥ सीमं-
तकर्मकरिष्यन्पतिरानडुहमजिनमपक्वफलयुग्मयुतामौदुंबरस्तबकौतदभावेऽन्यस्तबकौवात्रिशुक्लवर्णांशललींत्रीणिकुशपिंजूलानिचसं-
पाद्यपुण्याहवाचनग्रहयज्ञाभ्युदयिकानितदहरेवानुष्ठायमंगलस्नातांपरिहितमाहतनाहतवासोयुग्मालंकृतांपत्नींस्वदक्षिणतउपवेश्य

देशकालौस्मृत्वा ॥ नन्नुरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षमसकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वारास्यानिगर्भबीज
गर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थंस्त्रीसंस्काररूपंसीमंतोन्नयनाख्यंकर्मकरिष्येइतिसंकल्प्य ॥ वधूंकृतकौतुकबं
धांअर्चितेष्टदेवतांकृत्वा॥ शुभमुहूर्तेऔपासनाग्निंमंगलनामानंविधिवत्प्रज्वाल्यसमिद्ग्रहमादायपुनर्देशकालौस्मृत्वा ॰ द्यकरिष्यमाणेसीमं
तोन्नयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाद्वौधातारंद्वेराकांत्रिर्विष्णुंप्रजापतिंचैनाःप्रधानदेवताआज्ये
नशेषेणस्विष्टकृतमित्यादिपूर्ववदुक्त्वासमिद्द्वयमग्नावाधायपरिसमूहनादिकृत्वाप्रत्यगग्नेःस्वस्यदक्षिणतःप्राग्ग्रीवमुत्तरलोमकंमानडुहमजिन
नमास्तीर्यौदगर्भदर्भेषुप्रोक्षणीपात्रस्रुवौप्रणीताज्यपात्रेइध्माबर्हिषीचक्रमादासाद्याज्यसंस्कारांतेकृतेनरस्मिन्नजिनेतामाचांतांनोदकांप्राङ्मुखीं
पत्नीमुपवेश्यतयान्वारब्धइध्माधानाद्याज्यभागांतंकर्मकृत्वाधातादददातुदाशुषेइतिमंत्रद्वयस्यहिरण्यगर्भोधातानुष्टुप् ॥सीमंतोन्नयनप्रधाना
ज्यहोमेवि॰ ॥एवमग्रेपिवि॰ ॥ ॐ धातादददातुदाशुषेप्राचींजीवातुमक्षितां ॥ वयंदेवस्यधीमहिसुमतिंवाजिनीवतःस्वाहा ॥ धात्रइदं॰ ॥ ॐ धा
तांप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान ॥ धाताकृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोतस्वाहा ॥ धात्रइदं॰ ॥ राकामहमितिद्व
योर्गृत्समदोराकाजगती ॥ विनियोगःप्राग्वत् ॥राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्यमानया
ददातुवीरंशतदायमुक्थ्यं १ स्वाहा ॥राकायाइदं॰ ॥ ॐ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ताभिर्नोअद्यसुमनाउपा

र्गहिंसहस्त्रपोषंकृभगैररराणास्वाहा ॥ राकायाइदं॰ ॥ नेजमेषेतितिस्तृणां हिरण्यगर्भोविष्णुरनुष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ नेजमेषपरापत॰
अस्यैमेपुत्रकामायैगर्भ॰स्वाहा ॥ विष्णवइदं॰ ॥ यथेयंपृथिवीम॰ ॥ एवंतंगर्भमाधेहि॰स्वाहा ॥ विष्णवइ॰ ॥ ॐ विष्णोःश्रेष्ठेनरूपेणा॰
पुमांसंपुत्रानाधेहिद॰ विष्णव॰ ॥ प्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ प्रजापतेन॰स्वाहा ॥ प्रजापतयइ॰ ॥ ८ ॥ एव
मष्टाज्याहुतीःस्रुवेणहुत्वा ॥ पत्न्याःपश्चिमतःप्राङ्मुखस्तिष्ठन्नपक्वफलयुग्मान्वितमौदुंबरस्तबकद्वयंत्रिशुक्लांशलली कुशांकुरत्रयंचैकीकृ
तंपाणिनागृहीत्वातन्मूलेनपत्न्याःकेशललाटयोःसंधिमारभ्यामूर्धप्रदेशात् ॥ ॐ भूर्भुवःस्वरोमितिमंत्रेणत्रिश्वतुर्वाप्रत्युन्नयनंमंत्रमावर्तयन्
सीमंतमुन्नयेत् ॥ ॐ भूर्भुवःस्वरितिमंत्रस्यप्रजापतिःप्रजापतिर्बृहती ॥ सीमंतव्यूहनेवि॰ ॥ ततोयथाचारंसगोधूमामौदुंबरफलमालांतत्कंठे
निधायवीणागाथिनौहिजौसोमंराजानंसंगायेतामितिप्रेषयेत् ॥ तौच ॥ ॐ सोमोनोराजावतुमानुषीःप्रजानिविष्टचक्रासाविति मंत्रंअसा
वितिस्थानेगंगेइत्यादिसमीपस्थनद्याःसंबुध्यंतंनामनिर्दिशंतौवीणयागायेताम् ॥ सामगानाम्परिज्ञानेमंत्रमात्रंत्रिःपठेतां ॥ ततःस्विष्टकृ
दादिहोमशेषंसमाप्यब्रह्मणेऋषभंदक्षिणांतदभावेन्यस्मैविदुषेब्राह्मणायदत्वापतिपुत्रवतीभिर्वृद्धाभिरुपदिष्टंमंगलाचारंकारयेत् ॥ शतं
ब्राह्मणाभोज्याः ॥ इदंकर्मप्रतिगर्भंवकार्यं ॥ इदंचप्रतिगर्भंनावर्तते ॥ तथाचहारीतः ॥ सकृत्तुकृतसंस्काराःसीमंतेनद्विजातयः ॥ यंयंगर्भंप्रसू
यंतेसस्सर्वःसंस्कृतोभवेत् ॥ कारिकापि ॥ नावर्ततइदंकर्मप्रतिगर्भमितिस्थितिरिति अकृतसीमंतायाःप्रसवेविशेषः ॥ सत्यव्रतेनोक्तः ॥

स्त्रीयद्यकृतसीमंताप्रसूयेतकथंचन॥पुत्रंगृहीत्वाविधिवत्पुनःसंस्कारमर्हतीति॥ ॥इतिश्रीभट्टरामेश्वरसुतनारायणभट्टकृतेप्रयोगरत्ने
सीमंतोन्नयनप्रयोगः॥ ॥अथविष्णुबलिः॥ ॥गर्भाष्टमेमासेपूर्वेद्युर्दंपतीस्नातौधृताहतवाससावलंकृतौभवेतांततःपतिःप्रागुक्तवदा
भ्युदयिकंपुण्याहवाचनंकृत्वातदहरेववाइदंकृत्वादेशकालौस्मृत्वागुर्विण्याममपत्न्यागर्भस्यनिर्बाधपरिपोषणपूर्वकसुखप्रसूतिसिध्य-
र्थंगर्भाधिदेवताविष्णुप्रीतिकामोहंविष्णुबलिनामकंकर्मकरिष्यइतिसंकल्प्यद्वितीयासप्तमीद्वादशीश्रवणरोहिणीपुष्येषुचंद्रबलेविष्ट्या-
दिदोषाभावेपूर्वाण्हेगृहांगणेगृहेवास्थंडिलेगृह्याग्निंप्रतिष्ठाप्यपुनर्देशकालावुक्त्वाकरिष्यमाणेविष्णुबलिहोमेदेवतापरिग्रहार्थमित्यादिच
क्षुषीआज्येनेत्यंतमुक्त्वाविष्णुंप्रधानदेवतांचतुःषष्टिवारंचरुणाशेषेणस्विष्टकृतमित्याद्युक्त्वान्वाधायपरिसमूहनादिआज्यंदर्भाग्रद्वयप्र
क्षेपांतंकृत्वासिद्धान्नेनसहाज्यंत्रिःपर्यग्निकृत्वास्रुवसंमार्जनांतंकृत्वाचरुपात्रांतरेपृथक्कृत्वाप्रावधिश्रित्याभिघार्योदगुद्वास्याज्याद्दक्षिण-
तोबर्हिष्यासाद्यप्रत्यभिघारणाद्याज्यभागांतंकृत्वादक्षिणतोग्नेःस्थंडिलेऽष्टदलंपद्मंस्वस्तिकंवाप्रकल्प्यतत्रविष्णुमावाह्यषोडशभिरुपचारै-
रभिपूज्यपुनर्यथासनमासित्वापत्न्यान्वारब्धोवदानधर्मेणचरुमवदायस्रुचाचतुःषष्टिमंत्रैश्चतुःषष्टिमाहुतीर्जुहुयात्॥तत्रायंक्रमः॥अतो
देवाइतिषळृचस्यमेधातिथिर्विष्णुर्गायत्री॥विष्णोर्नुकमितिसप्तदशर्चस्यसूक्तस्य॥उचथ्यपुत्रोदीर्घतमाविष्णुः॥प्रथमसूक्तंत्रैष्टुभं॥द्वि
तीयतृतीयेजागते॥संवामित्यष्टर्चस्यभरद्वाजोविष्णुस्त्रिष्टुप्॥परोमात्रयेतिवर्गद्वयस्यवसिष्ठोविष्णुस्त्रिष्टुप्॥सहस्रशीर्षेतिवर्गत्रयस्य

नारायणःपुरुषोनुष्टुप् ॥ अंत्यात्रिष्टुप् ॥ विष्णुर्योनिमितितिसृणांहिरण्यगर्भोविष्णुरनुष्टुप् ॥ सर्वत्रविष्णुबलिप्रधानचरुहोमेवि० ॥ विष्णवइदंनम
मेतिनिसर्वत्रोद्देशत्यागौकृत्वा ॥ अनंतरमग्नेरैशान्यांद्वात्रिंशदंगुलायामविस्तारंगोमयेनोपलिप्तेस्थंडिलेचतुरंगक्रीडावत्समंचतुरस्रंचतुरंगुलचतुः
षष्टिपदंसितेनरजसामंडलंकृत्वातेषुपदेषुनैर्ऋत्यपदादिक्रमेणप्रथमंबाह्यावृत्तौनंतरमंतर्थेवानंतरावृत्तिषुचप्रागुक्तचतुःषष्टिमंत्रैःप्रणवादिभिःस्वाहां
तैःप्रादक्षिण्येनचरुशेषेणबलिंदत्वासर्वत्रविष्णवइदंनममेत्युद्दिश्यत्यक्त्वातन्मंडलमध्ये ॐ नमोनारायणायेतिबलिंदत्वापूर्ववत्त्यक्त्वातेनैव
मंत्रेणार्घ्यंचदत्वाबलिशेषात्किंचिदन्नमादायपिंडद्वयंकृत्वादंपतीपृथगश्नीयातां ॥ ततः आचम्यपतिःस्विष्टकृदादिहोमशेषंसमाप्यगुरवेदक्षि
णांदत्वायथाशक्तिब्राह्मणान्भोजयित्वादंपतीभुंजीयातां ॥ अयंचविष्णुबलिःप्रतिगर्भमावर्तते ॥ प्रतिगर्भंबलिःकार्योसीमंतश्चप्रशस्यतइत्या
श्वलायनोक्तेः ॥ इदंचगृह्यसूत्रानुक्तत्वादिदानींशिष्टानाचरंति ॥ इतिश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टविरचितेप्रयोगरत्नेविष्णुबलिः ॥

॥ ॥ अथजातकर्म ॥

॥ जातमात्रेपुत्रेपितानस्यमुखंनिरीक्ष्यनद्यादावुदङ्मुखःस्नात्वाअसंभवेदिवाहृताभिःशीताभिरद्भिःसुवर्णयुता
भिर्गृहएवस्नात्वाचम्यसितचंदनमाल्यादिभिरलंकृतोनालच्छेदनात्पूर्वंसूतिकादिव्यतिरिक्तैरस्पृष्टमकृतस्तनपानमप्रक्षालितमलंकुमारंमातुरुत्सं
गेप्राङ्मुखमवस्थाप्यब्राह्मणैःसहपुण्याहवाचनंकृत्वादेशकालौस्मृत्वाममास्यकुमारस्यगर्भांबुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबी
जगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्येइतिसंकल्प्याभ्युदयिकश्राद्धंहिरण्येनविधायहोमकरणपक्षेव्याहृतिभिर्लौकि-

काग्निंप्रबलसंज्ञंविधिवत्प्रतिष्ठाप्यदेशकालौस्मृत्वास्मिन्जातकर्महोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाअग्निमिं
द्रंप्रजापतिंविश्वान्देवान्ब्रह्माणमाज्येनयदस्येशेषेणस्विष्टकृतमित्यादिसंध्योयस्यइत्यंतमुक्त्वान्वाधायपरिसमूहनाद्याज्यभागांतंकृत्वाप्रधानदेवताभ्यः
चतुर्थ्यंतनाममंत्रेणाज्यंहुत्वादेवतोद्देशेनत्यागंकुर्यात् ॥ ततोविषमप्रमाणेनमधुसर्पिषीमिश्रीकृत्यशिलातलेनिक्षिप्यतत्रस्वर्णरजोविमोक्यावद्घृ
ष्यभाजनेनिधाय ॥ ॐ प्रतेददामिमधुनोघृतस्यवेदंसवित्राप्रसूतंमघोनां ॥ आयुष्मान्गुप्तोदेवताभिःशतंजीवशरदोलोकेअस्मिन्नितिमंत्रेणानेनैव
हिरण्येनकुमारंप्राशयित्वातद्धिरण्यंप्रक्षाल्यकुमारस्यदक्षिणकर्णेनिधायतन्मुखसमीपंस्वमुखमानीय ॥ ॐ मेधांतेदेवःसवितामेधांदेवीसरस्वती
मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजावित्यृचंजपित्वापुनस्तद्धिरण्यंसव्येकर्णेनिधायैतामेवऋचंजपेत् ॥ ततःशिशोरंसौयुगपदभिमृशेत् ॥ ॐ अ
श्माभवपरशुर्भवहिरण्यमस्तृतंभव ॥ वेदोवैपुत्रनामासिसजीवशरदःशतमितिमंत्रेण ॥ इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् ॥ विनियोगःप्रा
ग्वत् ॥ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमन्हां ॥ अस्मेप्रयंधिविश्वा
मित्रइंद्रस्त्रिष्टुप् ॥ ॐ अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायोविश्ववारस्यभूरेः ॥ अस्मेशतंशरदोजीवसेधाअस्मेवीरांछश्वतइंद्रशिप्रिन् ॥
इतिमंत्राभ्यांचाभिमर्शः ॥ ततोरक्षायुरभिवृद्ध्यर्थं ॥ ॐ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशत
मितिमंत्रमुच्चार्यमूर्धानंत्रिराजिघ्रेत् ॥ ततःशिशोःकरिष्यमाणंनामतदेवस्मरेत् ॥ अथस्विष्टकृदादिहोमशेषंसमाप्ययथाचारंहिरण्योदके-

नमातुर्दक्षिणस्तनंप्रक्षाल्य ॥ ॐ इमांकुमारोजरांधयतुदीर्घमायुःप्रजीवसे ॥ अस्मैस्तनौप्रयुंजानामायुर्वर्चोयशोबलमितिमंत्रेणमाताकुमारंपा-
ययित्वाब्राह्मणेभ्योगोभूतिलहिरण्यादिकमन्नवर्जितंयथाशक्तिदत्वाब्राह्मणैराशिषोवाचयेत् ॥ जन्मलग्नेदुष्टस्थानस्थितग्रहजनितपीडानिवृत्तये
तत्प्रीत्यर्थंविशेषतोदक्षिणादेया ॥ तमवैतमितिपंचानांवामदेवोग्निर्गायत्री ॥ तमवैतमितिपंचभिराशिषः ॥ होमोत्रकृताकृतः ॥ कुमार्याश्चैतज्जा
तकर्मामंत्रकंकार्यं ॥ रात्रौसंध्यायांग्रहणेजाताशौचांतरमध्येपीदंकार्यं ॥ मृताशौचमध्येजातश्चेत्तदैवाशौचांतेवाकार्यम् ॥ पितरिग्रामांतरगतेपि-
तृव्यादिर्गोत्रजोज्येष्ठक्रमेणेदंकुर्यात् ॥ इतिश्रीभट्टरामेश्वरसूनुनारायणभट्टकृतेप्रयोगरत्नेजातकर्मप्रयोगः ॥ ॥ अथषष्ठीपूजा ॥ ॥ पंच
मेषष्ठेचदिनेषष्ठएववापूर्वरात्रौपित्रादिराचम्यप्राणानायम्यदेशकालौस्मृत्वा अस्यशिशोः आयुरारोग्यावाप्तिसकलारिष्टशांतिद्वाराश्रीपरमेश्वरप्री-
त्यर्थंविघ्नेशस्यजन्मदानांषष्ठीदेव्याजीवंतिकायाश्चयथामीलितोपचारैः पूजनमहंकरिष्यइतिसंकल्प्यषोडशोपचारैस्तंत्रेणपूजयेत् ॥ पृथग्वासं
कल्प्यपृथगेवपूजाकार्या एतत्प्रतिमाश्चालेपनादिनाकुड्येलेखनीयाः ॥ पीठादौवाक्षतपुंजरूपेणनिवेश्याः ॥ पुरुषाःशस्त्रहस्ताःस्त्रियश्चनृ-
त्यगीतकारिण्योस्यांरात्रौजागरणंकुर्युः ॥ सूतिकागृहंचसधूमाग्निदीपशस्त्रमुसलायुधविभूतियुतंकार्यंसर्षपांश्चसर्वतोविकिरेत् ॥ अन्यदपिय-
थाचारंसर्वंकार्यं ॥ जन्मदादिभ्योन्नादिनाबलिर्देयः ॥ विप्रेभ्यश्चतांबूलखाद्यदक्षिणादिदद्यात् ॥ जननाशौचमध्येप्रथमषष्ठदशमदिनेषुदानेप्र
तिग्रहेचनदोषः ॥ अन्नंतुनिषिद्धम् ॥ षष्ठीप्रार्थना ॥ गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालःषष्ठिकेरक्ष्यतांनमः ॥ ॥

म॰र॰ ४४

॥ ॥ इतिश्रीनारायणप्र॰विर॰प्रयो॰षष्ठीपूजावि॰ ॥ ॥ अथनामकरणप्रयोगः ॥ ॥ जन्मतएकादशेद्वादशेवायथाचारंनियतदिनेवा
नामकरणंकार्यं नियतकालेपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्याश्राद्धदिनेषुनकार्यम् ॥ नियतकालेक्रियमाणेगुरुशुक्रास्तबाल्यवार्ध
कवक्रातिचारमलमासादिनिषेधोनास्ति ॥ नियतकालातिक्रमेतुज्योतिःशास्त्रोक्तेशुभेकालेकार्यं ॥ सर्वथात्रपूर्वाण्हःशस्तः ॥ अत्रहोमःकृता
कृतः ॥ उक्तकालेशिशोर्नामचिकीर्षुर्विप्रानाहूयपूर्वेद्युस्तदहरेववास्वस्तिवाचनमुपक्रम्यपुण्याहत्रयमुक्त्वाकरिष्यमाणंनामचतुर्थ्यंतमुक्त्वात्रिःएत
न्नाम्नेस्वस्तिभवंतोब्रुवंत्वित्युक्तेविप्रैरेतन्नाम्नेस्वस्तीतित्रिःप्रत्युक्तेशेषस्वस्तिवाचनंसमाप्येदमाद्याः कुमारस्यनामाहंविदधामीतिविप्राननुज्ञाप्य-
तैर्विधीयतामित्यनुमोदितोदेशकालौनिर्दिश्यास्यशिशोःबीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनाम
करणंकरिष्ये इतिसंकल्प्यग्रहयज्ञाभ्युदयिकेयथाशक्तिकृत्वायथाचारंस्वकुलदेवताभक्तइतिनामकृत्वाजन्मकालीनमासनामकुर्यात् ॥ तच्च ॥
कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ अत्रयथाचारं
चैत्रादिर्मार्गशीर्षादिर्वाक्रमः ॥ ततःस्त्रीपुरुषवाचिदेवतावाचिवास्वेष्टंवायुग्माक्षरंद्व्यक्षरंकु[illegible]मतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोनामकृ
त्वाततोभिवादनीयंनामविप्रादिवर्णक्रमेणशर्मवर्मगुप्तदासान्यतमपदांतमुपांशुकुर्यात् ॥ तच्चा[illegible]मौंजीबंधनान्मातापितरावेवजानीयातां ॥ उपन
यनकालेत्वनेननाम्नाभिवादयेतिकुमारंप्रतिवाच्यं ॥ अत्रायंशिष्टाचारः ॥ तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिस्फुवर्णशलाकयाकुलदेवताप्र-

ना॰क॰ ४४

सुक्तमादौ अमुकभक्त इतिनामलेख्यं ॥ ततोमासनामततोऽवकहडाचक्राख्यज्योतिःशास्त्रोक्तचक्रा नुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरा-
दिनामततोव्यावहारिकंस्वेष्टंनामेतिचतुष्टयंलिखित्वानामदेवताभ्योनमइतिसंपूज्यामुकनाम्नात्वमसुकोसीतिस्वदक्षिणस्थमातुरुत्संग
स्थस्यशिशोर्दक्षिणकर्णेकथयित्वानदस्तुमित्रावरुणेत्यादिमंत्रपाठानंतरंविप्रैर्नामस्कर्मनिष्ठितमस्त्वित्युक्तेअमुकनाम्नाअमुकनामायंप्र-
वतोभिवादयतइत्युक्त्वानामकर्तामतिनामविप्रानभिवादयेत् ॥ तेचायुष्मान्भवत्वमुकइतिवदेयुरिति ॥ नक्षत्रनाम्नैवाभिवादनीयंगुह्यंचे
त्यपिवदंति ॥ ततःकृतीदेवताभ्योब्राह्मणेभ्यश्चनत्वायथाविभवंविप्रान्भोजयेद्दक्षिणांचदद्यात् ॥ विप्राशिषश्चग्राह्याः कुमार्याअपिना
मकरणममंत्रकंकार्यं ॥ विषमाक्षरंतुतन्नाम ॥ होमपक्षेतुपार्थिवाग्नौजातकर्मवदेवप्रधानाहुतीर्हुत्वानामयथोक्तंधृत्वास्विष्टकृदादिहोम-
शेषतंत्रंकुर्यात् ॥ अत्रजातकर्मवत्पित्राद्याःक्रमेणकर्तारः ॥ ॥ इतिश्रीनारायणभ० प्रयो० नामक० स ॥ ॥ अथपर्यंकारोह
णम् ॥ ॥ तत्रनामकरणदिनेषोडशेद्वात्रिंशेन्यस्मिन्वाज्योतिःशास्त्रोक्तमृदुध्रुवक्षिप्रनक्षत्रादियुक्तेशुभेकालेयथाचारंकुलदेवतादिपू-
जांविधायालंकृतंशिशुंहरिद्राद्यलंकृतेपर्यंकेमात्राद्याःसौभाग्ययुक्ताःस्त्रियोयोगशायिनंहरिंस्मरंत्योगीतवाद्यादिसमकालंप्राक्शिरसंन्य
सेयुःस्वस्वाचारप्राप्तंचान्यदपिकार्यं ॥ ॥ अथदुग्धपानं ॥ ॥ एकत्रिंशद्दिनेद्वितीयेजन्मनक्षत्रेवान्यस्मिन्वान्नप्राशननक्षत्रयुक्तेशुभ-
भदिनेकुलदेवतादिपूजांतेगोक्षीरंशंखेनधात्रीमातान्यावास्वभगालंकृतंकुमारंदक्षिणशिरसंप्राक्शिरसंवापाययेदिति ॥ अथकर्णवेधः ॥

प्र॰र॰
४५

जन्मदिनाद्द्वादशेषोडशेवाद्दिने षष्ठसप्तमाष्टमदशममासान्यतममासे ऽन्यदावादंतजननात्पूर्वमेव ज्योतिःशास्त्रोक्तमासशुक्लपक्षतिथिवा
रनक्षत्रादिशुभकाले पूर्वाण्हे मध्यान्हे वा विष्णुशिवब्रह्मचंद्रसूर्यदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मणान्यथाविभवंसंपूज्य मातुरुत्सं
गस्थशुभासनस्थस्य अलंकृतस्य शिशोः कर्णयोर्वेध्यस्थलमलक्तकरसेनांकयित्वा यथाविभवं स्वर्णरूप्यताम्रलोहसूच्या मांगलिकद्विगु
णपटुत्वादिसूत्रोपेतया सौचिकेनान्येन वा कुशलेन स्कभगस्त्रिया वा प्राङ्मुखस्योदङ्मुखस्य वा कर्णौ वेधयेत् ॥ अनावृते सूर्यरश्मिपानस्थले ग
णादौ पित्रादिः कुमारस्य पूर्वं दक्षिणः कुमार्यास्तु पूर्वं वामः कर्णो वेध्यः ॥ वेधनक्षत्रतृतीयनक्षत्रे कर्णक्षालनमुष्णवारिणारोहणार्थं कार्यम् ॥
रूढौ च कर्णौ यथाभरणधारणक्षमतां भवति तथा वर्धनीयौ पुंसः सूर्यरश्मिप्रवेशयोग्यरंध्रपर्यंतं वर्धयेल्लंबकर्णता तु निषिद्धा ॥ स्त्रीणां यथे
च्छं ॥ ॥ अथ सूर्यावलोकनं निष्क्रमणं च ॥ ॥ जननात्तृतीये मासि जन्मदिने जन्मनक्षत्रे वा इष्टदेवतापूजनपूर्वकमलंकृतेन शिशुं
नासोत्सवं सूर्यदर्शनं कारयित्वा चतुर्थमासे शुभकाले ऽग्निं चंद्रं धेनुं च दर्शयेत् ॥ केचित्तु ॥ स्वस्ति न आत्रेयो विश्वेदेवास्त्रिष्टुप् ॥ शिशोरंकारोपणे
विनियोगः ॥ ॐ स्वस्ति नो मिमीताम॰ ॥ अनेन पित्रादिः शिशुमंकमारोप्य ॥ आशुः शिशान इति त्रयोदशर्चस्याप्रतिरथस्य सूक्तस्य इंद्रो-
प्रतिरथ इंद्रस्त्रिष्टुप् ॥ चतुर्थ्यां बृहस्पतिर्देवतात्रयोदश्यनुष्टुप् ॥ शिशोरायुष्याभिवृद्ध्यर्थं जपे विनियो॰ ॥ ॐ आशुः शिशानो वृषभो न भीमो
घना॰ १३ ऋक् ॥ असौ या सेनेति द्वे परिशिष्टऋचौ जपेत् ॥ तच्चक्षुर्वसिष्ठः सूर्यः पुरउष्णिक् ॥ कुमारस्यादित्यावेक्षणे वि॰ ॥ ॐ तच्चक्षुर्देव

कु॰वे॰
४५

हितं ॥ इतिसूर्यंनिरीक्षयेदितिवदंति ॥ तृतीयमासेसूर्यावलोकनंनकारितंचेन्निष्क्रमणेनैवसहकार्यम् ॥ ततश्चतुर्थेमासिषष्ठेवाशुक्लपक्षेशु
भतिथ्यादौपितासभार्यःशिशुरभ्यंगस्नातःममशिशोःआयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंनिष्क्रमणाख्यं
कर्मकरिष्ये इतिसंकल्प्यतदंगतयास्वस्तिवाचनाभ्युदयिकग्रहयज्ञान्कृत्वाइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानांप्राच्यादिदिशांचंद्रा-
र्कवासुदेवगगनानांचयथाक्रमंपूजांकृत्वाब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाचयित्वासायंसंध्यादिकंकृत्वाशिशुंसौवर्णैःकृत्रिमैर्वाभरणै
र्यथाशक्तिअलंकृत्यपूर्वंनकृतंचेदिदानींशिशुनाभिचंद्रधेनूनांदर्शनंकारयित्वाश्वादिवाहनस्थंशिशुंमातुलेनधात्र्यावावाहयित्वाभार्यापुत्रवि
दद्ब्राह्मणज्ञातिबांधवपुरंध्रीगणदर्पणपूर्णकलशयुक्तकन्यागणपुष्पहरिद्राक्षतदीपमालाध्वजलाजमंगलवाद्यघोषयुक्तःकनिक्रदज्जनुष
मित्यादिशकुनादिसूक्तमंगलसूक्तंपठन्गृहाद्बहिर्गत्वामंत्रमेनमुदीरयेत् ॥ चंद्रार्कयोर्दिगीशानांदिशांचवरुणस्यच ॥ निक्षेपार्थमिदंदद्मि ते-
त्वांरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रावथापिवा ॥ रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः ॥ एवंशिशुरक्षणार्थंदेवान्संप्रार्थ्यविष्णुशि
वालयोरन्यतरद्वाधुगृहंवागत्वातत्रदेवंसुमंगलवाद्यघोषपुष्पोपहारादिभिःसंपूज्यगोमयाद्यनुलिप्तचतुरस्रदेशेधान्यादिनिधायतत्रशिशुमा
सयित्वामंत्रेणरक्षांकुर्यात् ॥ मंत्रश्च ॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयस्त्र्यंबकोनुष्टुप् ॥ शिशोरक्षायांवि० ॥ ॐ जूंसः त्र्यंबकंयजाम
हेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ सःजूंइत्येवंरूपंमृतसंजीवनीमंत्रंजपन्विभूत्याक्षतैर्वामूर्ध्निलला

टेचरक्षांकृत्वा अपूपादिभिर्भूतेशानंगणेशमभ्यर्च्य शिशुंभक्ष्यादिभिस्तोषयित्वाशिषोवाचयित्वादेवताप्रणामंप्रदक्षिणात्रयंचशिशुना का
रयित्वा मातुलाद्यासन्नबंधुगृहे पूर्ववन्नीत्वातत्रदानोपहारादिभिः शिशुंतोषयित्वास्वगृहंगत्वाब्राह्मणेभ्यआशिषोवाचयित्वातेभ्यःसुवासिनी
भ्यश्चयथाशक्तिदक्षिणांदत्वाबंधुभिःसहभुंजीत ॥ कुमार्याअप्येतत्समानं ॥ होमोऽत्रकृताकृतः ॥ होमपक्षेशिशोरलंकरणानंतरंलौकिका
ग्निंप्रतिष्ठाप्यजातकर्मवदन्वादेशदेवताभ्योहुत्वा अग्निंचंद्रदर्शनादिस्वगृहगमनांतंकृत्वास्विष्टकृदादिहोमशेषंसमाप्यब्राह्मणाशीर्वादादि-
कारयेदितिक्रमः ॥ ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेनिष्क्रमणप्रयोगः ॥ ॥ अथोपवेशनविधिः ॥ ॥ पंचमेमासिशुक्लपक्षे-
ज्योतिःशास्त्रोक्तशुभतिथ्यादौपूर्वाण्हेस्वस्तिवाचनंकृत्वावराहंपृथिवींगुरुंदेवान्द्विजान्पूजयित्वाभूभागमुपलिप्यतत्रमंडलंकृत्वातत्रशंख
तूर्यादिमांगलिकध्वनौक्रियमाणेशिशुमुपवेशयेदनेनमंत्रेण ॥ रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आयुःप्रमाणंनिखिलंनिक्षिपस्वहरि
प्रिये ॥ अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः ॥ जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ धारिण्यशेषभूतानांमातस्त्वमधिकाह्यसि ॥
कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतामिति ॥ ततोब्राह्मणान्पूजयित्वाशिषोवाचयित्वानीराजनाद्युत्सवंकुर्यात् ॥ एवंकुमार्याअपि ॥ ॥
॥ ॥ अथान्नप्राशनप्रयोगः ॥ ॥ जन्मतःषष्ठेमासेऽष्टमेवादंतेषुजातेषुवाज्योतिःशास्त्रोक्ततिथिनक्षत्रादिशुभकालेपूर्वाण्हेपित्रादिः
शिशोरन्नप्राशनंकुर्यात् ॥ षष्ठेमासेचेत्क्रियतेतदागुरुशुक्रमौढ्यादिदोषोऽधिकमासादिदोषश्चनास्ति ॥ पित्रादिःसभार्यःशिशुंमंगलस्ना

संकृत्वा देशकालौ स्मृत्वा मम अस्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइंद्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हण
द्वारा श्रीपरमेश्वरप्रीत्यर्थं अन्नप्राशनाख्यं कर्म करिष्य इति संकल्प्य तदंगस्वस्तिवाचनाभ्युदयिके कृत्वा शिशुमलंकृत्य जातकर्मवल्लौकिका
ग्निं शुचिनामानं प्रतिष्ठाप्यानादेशाज्याहुती हुत्वा पूजोपहारादिभिरिष्टदेवतामभ्यर्च्य ततस्तुरतः स्वदक्षिणे शुभे वस्त्रोपरि मातुरुत्संगे प्राङ्मु-
खोपविष्टस्य शिशोः प्रथमान्नप्राशनं कारयेत् दधिमधुमिश्रमन्नं शुभे भाजने प्रक्षिप्य ॥ अन्नपत इत्यस्य अनलकुबेरोन्नपतिर्जगती ॥ शि-
शोरन्नप्राशने वि० ॥ ॐ अन्नपतेन्नस्य नो धेह्यनमीवस्य शुष्मिणः ॥ प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे इति मंत्रेण ससुवर्णह-
स्तोन्नमादाय प्रथमकवलं प्राशयित्वा यथेष्टं भोजयित्वा मुखं प्रक्षाल्य बालं भूमावुपवेश्य तदग्रे पुस्तकशस्त्रवस्त्रादिशिल्पानि विन्यस्य
जीविकापरीक्षां कुर्यात् ॥ शिशुः स्वेच्छया यत् प्रथमं स्पृशेत् तदस्य जीविकेति विद्यात् ॥ ततः स्विष्टकृदादिहोमशेषं समाप्य यथाशक्ति ब्रा-
ह्मणान् भोजयित्वा दक्षिणां दत्वाशिषो वाचयित्वा बंधुभिः सह स्वयं भुंजीत ॥ होमोत्र कृताकृतः ॥ होमपक्षे पूर्वेद्युर्नांदीश्राद्धं कुमार्या अप्ये-
तदमंत्रकं कार्यं ॥ किंतु सप्तमे मासे ॥ ॥ इति श्रीनारायणभट्टकृते प्रयोगर० अन्नप्राशनप्र० ॥ ॥ अथ वर्धापनविधिः ॥ ॥
आदित्यपुराणे ॥ सर्वैश्च जन्मदिवसे स्नानैर्मंगलवारिभिः ॥ गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥ स्वनक्षत्रं च पितरस्तथा देवः प्र-
जापतिः ॥ प्रतिसंवत्सरं यत्नात् कर्तव्यश्च महोत्सवः ॥ स्वनक्षत्रं स्वनक्षत्रदेवता स्वनक्षत्रं वित्तपश्चेति क्वचित्पाठः तदा वित्तपः कुबेरः

अत्रप्रयोगः॥ प्रतिवर्षंजन्मदिनेसौरमानेनजन्मनक्षत्रेवायजमानःपूर्वाण्हेभ्यज्यस्नात्वा सर्वौषधियुतजलपूरितकलशंसंपूज्यतदुदके-
नस्नातः शुक्लांबरधरोयथाविभवमलंकृतोविधिवत्स्वस्तिवाचयित्वाकौतुकमाबध्य दूर्वाहोमंकुर्यात्॥ तत्रायंक्रमः॥ देशकालौ-
स्मृत्वाममाब्दपूर्तिजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंदूर्वाहोमंकरिष्ये इतिसंकल्प्यविधिवदग्निंप्रतिष्ठाप्य पुनर्देशका
लौसंकीर्त्यसमिधावाद्यायास्मिन्दूर्वाहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइत्युक्त्वा अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यंतमु-
क्त्वाप्रधानदेवतांमृत्युंजयमष्टोत्तरशतंदूर्वाद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिधावग्नावाधायपरिसमूहनाद्या-
ज्यभागांतंकृत्वादधिमधुघृताक्तकेवलाज्याक्तंवादूर्वात्रयं॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयरुद्रोऽनुष्टुप्॥ दूर्वाहोमेवि०॥ ॐ जूंसः
त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्॥ सः जूं इत्यनेनमंत्रेणाष्टोत्तरशतंहुत्वास्विष्टकृदादिहोम-
शेषंसमापयेत्॥ ततोविधिवद्ग्रहयज्ञंकृत्वाआयुष्येचरुहोमंसंकल्प्य पूर्वकंकुर्यात्॥ तत्रायंक्रमः॥ देशकालौसंकीर्त्यास्मिन्होमेदेवतापरिग्र
हार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा विश्वान्देवान्दशवारमग्निं षोडशवारं जातवेदोग्निमेकवारंचरुद्रव्येणशेषेणस्विष्टकृतमित्या
दिसद्योयक्ष्यइत्युक्त्वासमिधावग्नावाधायपरिसमूहनाद्याज्येदर्भाग्रद्वयमक्षेपांतंकृत्वासिद्धान्नमाज्यसमीपेनिधायाज्येनसहतदन्नं
त्रिःपर्यग्निकृत्वाज्योद्वासनादिस्रुवसंमार्जनांतंकृत्वान्नंपात्रेपृथक्कृत्वाअग्नावधिश्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्याद्दक्षिणतोबर्हि-

घ्यासाद्य पुनरभिघारणाद्याज्यभागांतं कृत्वा आनोभद्रा इति दशर्चस्य सूक्तस्य गौतमो विश्वेदेवा आद्याः पंच सप्तमी च जगत्यः षष्ठी वि-
राट्स्थाना अष्टम्याद्यास्तिस्रस्त्रिष्टुभः ॥ इमंस्तोममित्यस्य षोडशर्चस्यांगिरसः कुत्सोग्निरादितश्चतुर्दश जगत्यः ॥ अंत्ये द्वे त्रिष्टुभौ ।
पूर्वार्द्धे वाभवत्वित्यादित्रयः पादा देवा देवताः ॥ तन्नोमित्रोर्धर्चो लिंगोक्तदेवत्यः अग्निदेवत्यश्च ॥ जातवेदस इत्यस्य मारीचः कश्यपो जा-
तवेदोग्निस्त्रिष्टुप् ॥ सर्वेषां चरुहोमे विनि० ॥ एतैः सप्तविंशतिमंत्रैरवदानधर्मेण हुत्वा स्विष्टकृदादि होमशेषं समाप्य वासुदेवं नक्षत्रदेव-
तां चंद्रं स्वनक्षत्रं वरुणं च षोडशोपचारैरभ्यर्च्य नततनूप्रकाशकमंत्रैर्घृतेनेनतेभ्यो यथाशक्ति होमं कृत्वा ग्रहयज्ञोक्तविधिनाभिषिक्तो यथाशक्ति
गोभूहिरण्यादि दत्वा देवगुरुब्राह्मणसुहृद्बंधुजनपूजां स्ववाहनायुधपीठच्छत्रपूजां कृत्वा विधिवन्नांदीश्राद्धं च कृत्वा ब्राह्मणान्भोजयित्वा
शुभमुहूर्ते गंधादिभिरलंकृत्य स्रग्भूषणधारणपूर्वकं सुवर्णमयकटिसूत्रं नूतनवस्त्रं च धृत्वा पतिपुत्रवतीभिः स्त्रीभिर्नीराजितो ब्राह्म-
णाशिषो गृहीत्वा स्वयं हविष्याशी जितेंद्रियो वर्तेतेति ॥ इदं सर्वं यावद्बाल्यं पित्रादिभिः कार्यं ॥ पश्चात्तु प्रतिवर्षं स्वयमेवेति ॥ इति प्रयोगपा-
रिजातोक्त अब्दपूर्तिविधिः ॥ ॥ अन्यत्र तु ॥ ॥ वर्षपर्यंतं प्रतिमासं ततः प्रतिवर्षं मांगल्यस्नानं कृत्वा कुसुमादिदेवताः संपूज्य यथाशक्ति
ब्राह्मणभोजनदक्षिणां च दत्वा सुवासिनीभिर्नीराजितो धृतनूतनवस्त्रो ब्राह्मणीभ्यः शिशुभ्यश्चापूपपूरिकाः ॥ साज्याः कुसुमादिप्रीतये आ-
युर्वृद्धये च वायनानि दद्यात् ॥ जन्मर्क्षदेवताप्रीत्यै च दद्यात् ॥ वर्षांते तु सुहृद् द्वादशवंशपेटिकाः समोदकादिखाद्यं निधाय नूतनवस्त्राच्छादिताः

प्र॰ र॰
४८

पेटिकाः जीवत्पतिपुत्राभ्योदत्वातदाशिषोगृह्णीयात् ॥ इदंसर्वंजीवंतीमातैवापत्यायुषेकुर्यात् ॥ ग्रंथांतरेतु ॥ गणेशंग्रहानिष्टदेवतांमार्कंडे
यंचप्रपूज्यप्रार्थयेत् ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन ॥ आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने ॥ चिरजीवीयथात्वंतुमुनीनांप्रवर
द्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीविनं ॥ ततः मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव ॥
सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः ॥ मार्कंडेयाद्वरंलब्ध्वापि बाम्यायुर्विवृद्धयेइतिसतिलगुडमंजल्यर्धमितंदुग्धंपिबेत् ॥ अश्वत्थामाब
लिर्व्यासोहनूमांश्चविभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ सप्तैतान्यःस्मरेन्नित्यंमार्कंडेयमथाष्टमं ॥ जीवेद्वर्षशतंसाग्रमपमृ
त्युविवर्जितः ॥ इतिवचनादश्वत्थामादीन्मार्कंडेयांतानष्टौस्मरेदिति ॥ इदंचवर्धापनंयदिजन्ममासःअसंक्रांतस्तदाशुद्धमासएवकार्यंन
त्वधिके ॥ ॥ इतिश्रीना॰ प्रयो॰ वर्धापनप्रयोगः ॥ ॥ अथचौलं ॥ ॥ तत्रकालस्तावत्प्रथमेद्वितीयेतृतीयेपंचमेसप्तमेवावर्षेग
ततृतीयभागेअगतेत्रिभागेवाउपनीत्यासहवायथाकुलाचारंचौलंकार्यं ॥ तत्रापिद्वितीयादौवर्षेजन्मतोमुख्यंगर्भतोगौणंउदगयनेशुक्ल-
पक्षेगुरुशुक्रयोर्बाल्यवार्धकास्तमयाभावेअक्षयेअनधिकेचमासिज्योतिःशास्त्रोक्तप्रशस्ततिथिवारलग्नेषुशुभेमुहूर्तेदिवैवनतुरात्रौ-
कार्यं ॥ इदंकर्मलौकिकाग्नौतस्यसभ्यइतिनाम ॥ यदिगर्भाधानादिसंस्कारलोपस्तदाप्रायश्चित्तंकृत्वाकालात्ययनिमित्तंप्रायश्चित्तहोमं
चकृत्वाचौलहोमःकार्यः ॥ तद्यथाहभगवान् ॥ आरभ्याधानमाचौलात्कालेतीतेतुकर्मणां ॥ व्याहृत्याज्यंसुसंस्कृत्यहुत्वाकर्मयथाक्रमम् ॥

र॰ प॰
४८

कार्यमितिशेषः ॥ प्रायश्चित्तंचसएवाह एनेघेकैकलोपेपिपादकृच्छ्रंसमाचरेत् ॥ चूडायाश्चार्धकृच्छ्रंस्यादापदिलेवमीरितं ॥ अनापदि-
तुसर्वत्रद्विगुणंद्विगुणंचरेत् ॥ मनुः ॥ जातकर्मादिसंस्काराःस्वकालेनभवंतिचेत् ॥ चौलादर्वाक्प्रकुर्वीतप्रायश्चित्तादनंतरं ॥ प्रायश्चि-
त्तहोमेकृतेनतत्कर्मकृतमकृतं ॥ तथाचकारिका ॥ प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै ॥ कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितः ॥ प्रा-
यश्चित्तहोमस्तुप्रधानहोमात्पूर्वंसमस्ताभिर्व्याहृतिभिः प्रतिकर्मलोपमेकैकाज्याहुतिःकार्येति ॥ ॥ अथचूडाकर्मप्रयोगः ॥ ॥
उक्तेतृतीयादौवर्षेउदगयनेशुक्लपक्षेप्रशस्ततिथिवारनक्षत्रयोगयुतेशुभेमुहूर्तेकुमारस्यचौलकर्मकरिष्यन्कर्तापूर्वेद्युःस्वस्तिवाचन
पूर्वकंनांदीश्राद्धंग्रहयज्ञमंकुरार्पणंचकृत्वापरेद्युःकृतमंगलस्नानंकुमारमलंकृत्यब्राह्मणैःपुण्याहंवाचयित्वामात्रंकेकुमारंदक्षिणतउप-
वेश्यदेशकालौस्मृत्वा अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणेनबलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंचौलाख्यंकर्मकरिष्ये
इतिसंकल्प्यशुभेमुहूर्तेउपलेपादिसभ्याग्निप्रतिष्ठांतंकृत्वापुनर्देशकालौनिर्दिश्यमयाक्रियमाणेचौलकर्मणिहोमेदेवतापरिग्रहार्थमन्वा-
धानंकरिष्ये अस्मिन्नन्वाहितेग्नावित्याद्याधारावाज्येनेत्यंतमुक्त्वाग्निंत्रिरग्निंपवमानंप्रजापतिंचैताःप्रधानदेवताआज्येनशेषेणस्विष्टकृतमित्या-
द्युक्त्वासमिद्द्वयमग्नावाधायपूर्णपात्रनिधानांतंषट्पात्रप्रयोगादितंत्रंकृत्वा अग्नेरुदगास्तीर्णेषुदर्भेषुव्रीहियवमाषतिलैःपृथक्पृथक्पूरि-
तानिनवानिशरावाणिचत्वारिक्रमेणैकैकशःप्राक्संस्थान्यासादयेत् ॥ माताप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतःकुमारमुत्संगेकृत्वासीन ॥

ततः कर्ता मातुः पुरस्तात् पश्चाच्चाग्नेरानडुहगोमययुतशरावं शमीपर्णयुतशरावं च निदध्यात् ॥ ततो ब्रह्मा एकविंशतिकुशपिंजूलान्यादा-
य मातुर्दक्षिणतस्तिष्ठेत् ॥ पितावा तथा तिष्ठेत् ॥ अस्मिन्पक्षे ऽन्य एव चौलकर्ता ॥ ततः कुमारेणान्वारब्धः कर्ता पुरस्तन माधारांतं क-
र्मकृत्वा ॥ अग्न आयूंषि तिनिसृणां शतं वैखानसा ऋषयः ॥ अग्निः पवमानो देवता ॥ गायत्री छंदः ॥ चूडाकर्मप्रधानाज्यहोमे वि० ॥ ॐ अ-
ग्न आयूंषि पवस आसुवोर्जमिषं च नः ॥ आरे बाधस्व दुच्छुनां स्वाहा ॥ अग्नये पवमानायेदं न मम इति त्यागः एवमग्रेपि ॥ ॐ अग्निर्ऋषिः
पवमानः पांचजन्यः पुरोहितः ॥ तमीमहे महागयं स्वाहा ॥ अग्नये पवमा० ॥ ॐ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं ॥ दधद्रयिं मयि पो-
षं स्वा० ॥ अग्नये प० ॥ ३ ॥ प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ चूडाकर्मप्रधानाज्यहोमे वि० ॥ ॐ प्रजापते न त्वदेतान्यन्यो० प्रजा-
पतय० ॥ ४ ॥ ततः शीतमुष्णं चोभे जले दक्षिणवामकराभ्यां क्रमेण पात्रयोः पृथग्गृहीत्वा शिशोः पश्चिमदेशे स्थित्वा तदुदकद्वयम-
न्यस्मिन्पात्रे पाणिभ्यां ॐ उष्णेन वाय उदकेनेहीति मंत्रेण युगपन्निनीय तदेकदेशं गृहीत्वा नवनीतेन दधिद्रप्सेन वा मिश्रयित्वा कुमारस्य
वामकर्णमारभ्य प्रदक्षिणं ॥ ॐ अदितिः केशान्वपत्वाप उंदंतु वर्चस इति मंत्रेण शिरस्त्रिवारं क्लेदयेत् ॥ प्रतिक्लेदनं मंत्रावृत्तिः ॥ ततो ब्रह्मा
हस्तस्थितैकविंशतिकुशपिंजूलमध्ये त्रीणि कुशपिंजूलान्यादाय ॐ ओषधे त्रायस्वैनमिति मंत्रेण कुमाराभिमुखं पश्चिमाग्राणि तस्य द-
क्षिणे केशभागे निधाय तेषु ताम्रमयं क्षुरं ॐ स्वधिते मैनं हिंसीरिति मंत्रेण निधाय ॥ ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य वि-

द्यात् ॥ तेनब्रह्मणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासदितिमंत्रेणसकेशानिपिंजूलानिछित्वाप्रागग्राणिकृत्वाशरावस्थशमीपर्णैरेकीकृत्य
मातुःकरेदद्यात् ॥ साचतानिसकेशान्यानडुद्दे गोमयेप्रागग्राणिनिदध्यात् ॥ एवंद्वितीयादिछेदनेषुपिंजूलनिधानादिसमंत्रकंकार्यम् ॥ छेदन-
मंत्रेतुविशेषः ॥ ॐयेनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेननआयुषेवपामिसश्लोक्यायस्वस्तयइतिद्वितीयच्छेदने ॥ ॐयेनभूयश्च
रात्र्यांज्योक्चपश्यातिसूर्यं ॥ तेननआयुषे० यइतितृतीयच्छेदने ॥ चतुर्थेतुयेनावपत्० येनधाता० येनभूयश्चेतित्रयोपिमंत्राः ॥ एवंदक्षिणे
केशभागेचत्वारिच्छेदनानिकृत्वोत्तरेपिकेशभागेएवमेवप्रत्येकमंत्रैरेवत्रीणिच्छेदनानिकुर्यात् ॥ नतुसर्वमंत्रैश्चतुर्थं ॥ ततः ॥ यत्क्षुरे
णमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीरितिमंत्रेणाग्रतआरभ्यामूलंक्षुरधारांनिमृज्यनापितमाहूय ॐशी
तोष्णाभिरद्भिरर्थंकुर्वाणोक्षण्वन्कुशली कुर्वितिप्रैषेणानुशास्यतंप्रैषार्थंचावबोध्यनापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृतंकुमारशि
रोयथाकुलाचारंकल्पितशिखंवापयित्वाकुमारंस्नापयित्वाभूषयित्वापूर्ववन्मातुरुत्संगे० वस्थाप्यस्विष्टकृदादिहोमशेषंसमाप्यव्रीह्यादिपू
शरावचतुष्टयंनापितायदद्यात् ॥ भूयसींदक्षिणांदत्वाब्राह्मणेभ्योदशसंख्याकेभ्योभोजनंचसंकल्प्यकर्मसंपूर्णतांवाचयित्वायस्यस्मृत्येत्य
क्त्वाविष्णुंनमस्कृत्याशिषोब्राह्मणोक्ताःस्वयंकुमारश्चगृण्हीयात् ॥ एतत्सर्वंकुमार्याअप्यमंत्रकं ॥ होमस्तुसमंत्रकइति ॥ मध्येशिरसिचू
डास्याद्वासिष्ठानांतुदक्षिणे ॥ उभयोःपार्श्वयोरत्रिकश्यपानांशिखामता ॥ शिशोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ पंचमाब्दादधोर्ध्वंतु-

गर्भिण्यामपिकारयेत् ॥ सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते ॥ ॥ इतिश्रीनारायणभ० प्रयोगर० चूडाकर्म० ॥ ॥ अथोपनयनं ॥
तद्गर्भाष्टमेऽष्टमेवाब्दे कार्यम् ॥ मनुः ॥ ब्रह्मवर्चसकामस्यकार्यंविप्रस्यपंचमे ॥ विष्णुः ॥ षष्ठेतुधनकामस्यविद्याकामस्यसप्तमे ॥ अष्ट
मेसर्वकामस्यनवमेकांतिमिच्छतः ॥ तथासंग्रहे ॥ सप्तमेचाष्टमेवर्षेनवमेदशमेतथा ॥ एकादशेद्वादशेवाह्युपनेयाद्विजातयः ॥ ब्रह्मवर्चस्य
मायुष्यंतेजोन्नाद्यंतथेंद्रियं ॥ पशून्कामयमानावैप्राप्नुवंतियथाक्रमम् ॥ नृसिंहः ॥ उत्तरायणगेसूर्येकर्तव्यंह्युपनायनं ॥ श्रुतिः ॥ वसंतेब्रा
ह्मणमुपनयीत ॥ वराहः ॥ माघादिपंचमासेषुमेखलाबंधनंशिशोः ॥ ज्येष्ठमासेनज्येष्ठस्यजन्ममासेनसर्वेषां ॥ शुक्लपक्षेद्वितीयादिस्व
ध्यायतिथिषुनानध्यायेननैमित्तिकानध्यायेपूर्वाण्हेशुभमुहूर्तेशुभचंद्रादौगुरुशुक्रयोर्बाल्यवार्धक्यास्तराहित्यादौज्योतिर्वित्प्रोक्तेशुभ
कालेउपनयनंकार्यम् ॥ उपनयनेकर्तृक्रममाहवृद्धगर्गः ॥ पितापितामहोभ्राताज्ञातयोगोत्रजाग्रजाः ॥ उपनयेऽधिकारीस्यात्पूर्वाभावेपरः
परः ॥ तथा ॥ पितैवोपनयेत्पुत्रंतदभावेपितुःपिता ॥ तदभावेपितुर्भ्रातातदभावेतुसोदरः ॥ अधिकारसिद्ध्यैप्रायश्चित्तमाहवृद्धविष्णुः
कृच्छ्रत्रयंचोपनेतात्रीन्कृच्छ्रांश्चबटुश्चरेत् ॥ आचार्योद्वादशसहस्रंगायत्रींजपेत् ॥ तथा ॥ नांदीश्राद्धेकृतेपश्चादनध्यायस्त्वकालिकः
मौंजीबंधंतदाकुर्याद्वेदारंभंनकारयेत् ॥ अकालिकोगर्जननिर्घातादिनिमित्तकः ॥ आश्वलायनानांउपनयनदिनेवेदारंभाभावात् ॥ वे
दारंभकरणंयजुर्वेदिविषयं ॥ आश्वलायनस्तुवृद्धिश्राद्धदिनात्षड्दिनमध्येमुहूर्तांतरेसतितेनैवनांदीश्राद्धेनतत्रोपनयनंकुर्यात् ॥ तदू

र्ध्वंतु मुहूर्ते श्राद्धांतर पूर्वकमुपनयनं यथाकालं कुर्यात् ॥ इत्युपनयनोक्तविचारः ॥ ॥ अथोपनयनप्रयोगः ॥ ॥ उक्तकाले उपनिनी
षुराचार्यः पूर्वेद्युर्बटोः परिधानार्थं शुक्लं क्षौमं शणं नवं संदशांपरेणाधृतं वस्त्रमुत्तरीयार्थं च काषायवस्त्रमजिनं वा कृष्णमृगस्य यज्ञोपवीतं मौं
जीमेखलां पालाशमव्रणं मृजुं सौम्यदर्शनं बटोः केशसंमितं साग्रं दंडं कौपीनं तद्बंधनसूत्रं भिक्षाभाजनं च संपाद्य स्वस्योपनेतृत्वाधिकार-
सिद्ध्यर्थं कृच्छ्रत्रयं द्वादशसहस्त्रगायत्रीं जपं वा कुमारेणापि कामचार कामवाद काम भक्षणादिदोषापनोदार्थं कृच्छ्रत्रयं कारयित्वा स्वस्तिवा
चनांकुरार्पणग्रहयज्ञनांदीश्राद्धानि संकल्प पूर्वकं कृत्वा मंडपप्रतिष्ठां कुर्यात् ॥ तत्र संकल्पः ॥ अस्य कुमारस्योपनयने ग्रहानुकूल्यसिद्धिद्वा
राश्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्ये ॥ ग्रहयज्ञं समाप्यास्य कुमारस्य द्विजत्वसिद्ध्या वेदाध्ययनाधिकारार्थं च उपनयनं करिष्ये तदंगभू
तमद्य गणपति पूजन पूर्वकं स्वस्तिवाचनं मातृका पूजनं नांदीश्राद्धं मंडपप्रतिष्ठां कुलदेवतादिस्थापनं च करिष्ये ॥ उपनयनेन सह चौलकरणपक्षे
तदपि संकल्पे कीर्तयेत् ॥ तंत्रेण च स्वस्तिवाचन ग्रहयज्ञनांदीश्राद्धादीनि कुर्यात् ॥ अथापरेद्युः कृतनित्यक्रियः कृतमंगलस्नानमलंकृतं कुमार
मुक्तस्वस्त्ययनं कृतकौतुकबंधं मात्रुत्संगे भोजयित्वा देशकालौ संकीर्त्य अस्य कुमारस्योपनयनं कर्तुं तदंगत्वेनांगभूतं वापनादि करिष्ये इति
संकल्प्य कृतवापनं स्नापितं बद्धशिखं कुमारं मौहूर्तिकोक्ते शुभमुहूर्ते स्वसमीपमानीय तन्मुखं सम्यगीक्षेत ॥ ततस्तं स्वदक्षिणत उपवेश्य
उपलेपाद्यग्निप्रतिष्ठांतं कृत्वा समिद्द्वयमादाय तिथ्यादि समुच्चार्य अस्य कुमारस्य द्विजत्वसिद्ध्यर्थं क्रियमाणे उपनयन होमे देवतापरिग्र-

प्र॰र॰
५१

हार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्या द्याघारावाज्येनेत्यंतमुक्त्वाग्निरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिस-
द्योयक्ष्य इत्यंतमुक्त्वाव्याहृतिभिरग्नावाधायपरिसमूहनाद्याज्यसंस्कारांतंकृत्वा आचार्योग्नेःपश्चादवस्थायकुमारंप्राङ्मुखमवस्थाप्यकौ-
पीनार्थंत्रिवृतंकार्पाससूत्रंकटावाबध्यकौपीनंपरिधाप्यद्वितीयजन्मस्तुल्बप्रतिनिधिभूतमहतंशुक्लंवासःसमंत्रकंपरिधाप्यान्येनकाषायवा
ससानथैवप्रावरयेत् ॥ तत्रमंत्रः ॥ युवंवस्त्राणीत्यस्योचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ वासोधारणेवि० ॥ ॐ युवंव० ॥ प्रावरणार्थंकृष्णा-
जिनंवा ॥ तच्च ॥ त्र्यंगुलंतुबहिर्लोमयद्वास्याच्चतुरंगुलं ॥ अजिनंधारयेद्विप्रश्चतुर्विंशाब्दषोडशेः ॥ मित्रस्यचक्षुरित्यस्यवामदेवोजिनंत्रिष्टुप्
अजिनधारणेवि० ॥ ॐ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ ततोद्विज
त्वचिन्हार्थंयज्ञोपवीतंदद्यात् ॥ यज्ञोपवीतमित्यस्यपरब्रह्मपरमात्मात्रिष्टुप् ॥ श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंद्विजत्वसिद्धयेयज्ञोपवीतधार
णेवि० ॥ ॐ यज्ञोपवीतंपरमंपवित्रंप्रजा०जः ॥ इतिमंत्रंवाचयित्वातद्दक्षिणबाहुमुद्धार्यउपवीतंधारयित्वा ॥ कुमारमात्मनोग्नेश्चमध्येनयज्ञ
पात्रोत्तरभागंगमयित्वातत्रविधिवदाचम्यपुनस्तथैवानीयस्वदक्षिणेउपवेश्यबर्हिरास्तरणादिस्रुवसंमार्जनांतंकृत्वाब्रह्मचार्यन्वारब्धइध्मा
धानाद्याज्यभागवर्जंकुर्यात् ॥ ततः अग्न आयूंषीतितिसृणांशतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गायत्रीछंदः ॥ उपनयनप्रधाना
ज्यहोमेविनियोगः ॥ ॐ अग्नआयूंषि० स्वाहा ॥ अग्नयेपवमानायेदंनममेतित्यागः ॥ एवमग्रेपि ॥ ॐ अग्निर्ऋषिः०स्वाहा ॥ ॐ अग्नेपवस्वस्व

उ॰न॰
५१

पा० ॥ स्वाहा ॥ प्रजापतय इत्यस्य हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ उपनयनप्रधानाज्यहोमे वि० ॥ ॐ प्रजापतेन० स्वाहा ॥ प्रजापतय इदं० ॥ अथा-
चार्य उत्तरतोऽग्नेः प्राङ्मुखस्तिष्ठेत् ॥ कुमारोऽप्यग्न्याचार्ययोर्मध्येन गत्वा आचार्याभिमुखस्तिष्ठेत् ॥ अथाचार्यः संयतात्मा कुमारस्य शुचिव-
सिद्ध्ये सवितृदेवतां प्रत्येचांजलिक्षारणं कुर्यात् ॥ तच्चेत्थं ॥ शुद्धोदकेन शिष्यांजलिमापूर्य स्वस्यांजलिमन्येन पूरयित्वा ॥ तत्सवितुरि-
त्यस्य श्यावाश्वः सवितानुष्टुप् ॥ अवक्षारणे वि० ॥ ॐ तत्सवितुर्वृणीमहे वयं देवस्य भोजनं ॥ श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥ अनेन
स्वांजल्युदकं शिष्यांजलावेवक्षार्य तज्जलं कुमारांजलिनैवावक्षारयेत् ॥ ततः शिष्यत्वसिद्ध्यर्थं बटोर्हस्तं गृण्हीयात् ॥ तत्रमंत्रः ॥ देवस्य
त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां हस्तं गृण्हामीति यजुरंते सुकशर्मन्निति कुमारस्याभिवादनिकं नाम शर्मांतं संबुद्ध्या निर्दिश्य द-
क्षिणेन पाणिना कुमारस्य सांगुष्ठं दक्षिणपाणिं गृहीत्वा पुनरपि पूर्ववदुदकपूरणादि कृत्वा सवितातेहस्तमग्रभीदिति मंत्रांते पूर्ववद्दुना मो-
क्ताहस्तं गृहीत्वा पुनरपि पूर्ववत् पूरयित्वा अग्निराचार्यस्तवेति मंत्रांते पूर्ववत्तन्नामनिर्दिश्य हस्तं गृण्हीयात् ॥ अथाचार्यो ब्रह्मचारिणा सह
निष्क्रम्य देवसवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्युच्चार्य संरक्षणार्थं व्रतपतये आदित्याय बटुं ददामीति मनसा स्मरन् ॥ ब्रह्मचारि-
णमादित्यमीक्षयेत् ॥ ततः उभावपि पूर्ववदुत्तरतोऽग्नेरन्योन्याभिमुखौ तिष्ठेतां ॥ अथाचार्यः कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि।
कस्त्वाकमुपनयते काय त्वा परिददामीति मंत्रं जपन् कुमारं प्रजापतये रक्षणार्थं मनसा समर्प्य ॥ युवासुवासा इत्यस्य कौशिको विश्वामित्रो यू

परिस्त्रिष्टुप्॥ पूर्वार्धर्चस्यप्रदक्षिणावर्तनेउत्तरार्धर्चस्यपाणिभ्यांबटोर्हृदयालंबनेविनियोगः॥ ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भव
तिजायमानः॥ इत्यर्धर्चमुच्चारयन्बटुंप्रदक्षिणमावर्त्यप्राङ्मुखमवस्थापयेत्॥ ततःकुमारांसयोरुपरिस्वपाणीगमयित्वा ॐ तंधीरासः
कवयउन्नयंतिस्वाध्यो ३ मनसादेवयंतः॥ इत्युत्तरार्धर्चमुच्चार्यतद्धृदयप्रदेशंसकृत्पाणिभ्यांस्पृशेत्॥ ततआचार्यआत्मानमग्निंचांतरेण
बटुंनीत्वाप्रत्यगग्नेःस्वयमुपविश्यस्वस्यदक्षिणतःप्राङ्मुखंतमुपवेशयेत्॥ ततोबटुरग्नेःपरिसमूहनपर्युक्षणेकृत्वाहूतिकारमतेत्वकृत्वा
अग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती॥ समिदाधानेवि०॥ ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे॥ तयात्वमग्नेवर्धस्वसमिधा –
ब्रह्मणावयंस्वाहेतिसमिधमाधाय॥ अग्नयइदंनममेत्युद्देशत्यागंकृत्वापाणिंप्रक्षाल्याग्निंस्पृष्ट्वा ॐ तेजसामासमनज्मीतिसंमृज्योष्ठद्वयंमु-
खमथाङ्गानिमृज्यपाणिंप्रक्षाल्यपुनरग्निंस्पृष्ट्वामंत्रेणतथैवमुखंनिमृज्यपाणिंप्रक्षालयेत्॥ ततस्तिष्ठन्प्रणतिमुद्रांकृत्वामयिमेधामितिष-
ण्णांहिरण्यगर्भऋषिः॥ पूर्वेषांत्रयाणामग्नींद्रसूर्यादेवताः॥ उत्तरत्रयाणामग्निर्देवता॥ गायत्रीछंदः॥ अग्न्युपस्थानेवि०॥ ॐ मयिमेधांमयि
प्रजांमय्यग्निस्तेजोदधातु॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु॥ यत्तेअग्नेतेजस्तेनाहंतेज-
स्वीभूयासं॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासमितिषण्मंत्रैरग्निमुपस्थाय॥ मानस्तोकेतिकुत्सोरुद्रो
जगती॥ विभूतिग्रहणेवि०॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वा

ह्वामहे ॥ इत्यनेन भस्मादाय यथाचारं त्र्यायुषं जमदग्नेरिति ललाटे ॥ कश्यपस्य त्र्यायुषमिति कंठे ॥ अगस्त्यस्य त्र्यायुषमिति नाभौ ॥ यद्दे-
वानां त्र्यायुषमिति दक्षिणांसे ॥ तन्मे अस्तु त्र्यायुषमिति वामांसे ॥ सर्वमस्तु शतायुषमिति शिरसि धारयेत् ॥ पुनः परिसमूहन पर्युक्षणे कृत्वा
कृतांजलिस्तिष्ठन् ॥ ॐ चमेस्वरश्च मे यज्ञोप च ते नमश्च ॥ यत्ते न्यूनं तस्मै त उपयन्ते तिरिक्तं तस्मै ते नमः ॥ अग्नये नमः ॥ स्वस्ति श्रद्धां मेधां यशः
प्रज्ञां विद्यां बुद्धिं श्रियं बलं ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥ इत्यग्निमुपस्थाय ॥ अग्नेरुत्तरतो गत्वा प्राङ्मुखी भूयाचार्याभिमु-
खो भूत्वा दक्षिणं जानुं भूतले निधाय पाणिभ्यां यथासव्यं दक्षिणं श्रोत्रे संस्पृश्य व्यस्तपाणिराचार्यस्य दक्षिणपादं स्वदक्षिणहस्तेन सव्यं च
सव्यहस्तेन जानुप्रभृतिपादपर्यंतं स्पृष्ट्वा ॥ अमुकगोत्रो अमुकशर्माहं भो अभिवादय इत्युच्चारयन् शिरोवनतिपूर्वकमभिवाद्य आचार्येणायुष्मान् भव
सौम्य देवदत्ता इति प्रयुक्ताशीर्वादो विनयावनतो भूत्वा सावित्र्युपदेशं वांछन् ॥ अधीहि भोः सावित्रीं भो ३ अनु ब्रूहीत्याचार्यं प्रत्युक्त्वा स्ववामपाणि
मुत्तानीकृत्य दक्षिणपाणिन्यङ्मुखीकृत्य संधाय पाणिपृष्ठमंगुलीश्चांगुष्ठौ च दृढीकृत्य कृतं ब्रह्मांजलिं दक्षिणां केनिक्षिप्याचार्यांतिक आसीत ॥
अथाचार्यस्तदंजलिं तत्परिधानीयवाससा आच्छाद्य स्वपाणिभ्यां तदंजलिं परिगृह्य प्रणवव्याहृतिपूर्वकं सावित्रीं प्रथमं पादशः स्वयमुक्त्वा
वाचयेत् ॥ ततोर्धर्चशस्ततः सर्वां एवं ग्रहणाशक्तौ यथाशक्ति स्वयमुक्त्वा वाचयेत् ॥ तद्यथा ॥ प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता ॥ दे
वी गायत्री छंदः ॥ व्याहृतिमंत्रस्य प्रजापतिः प्रजापतिर्बृहती ॥ गायत्र्या विश्वामित्रः सविता गायत्री ॥ उपनयने वि० ॥ गायत्रीं वाचयित्वा ॥ त

नः॥ममव्रतइतिमंत्रस्यप्रजापतिर्ऋषिः॥बृहस्पतिर्देवता॥त्रिष्टुप्छंदः॥बटोर्हृदयेऊर्ध्वांगुलिपाणिनिधानेवि०॥ॐममव्रतेहृदयंतेदधामिमम
चित्तमनुचित्तंतेअस्तु॥ममवाचमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यमितिस्वपाणिमूर्ध्वांगुलिंब्रह्मचारिणोहृदयदेशेनिधायतस्यरक्षा
र्थंशक्त्यर्थंचमेखलामाबध्नीयात्॥इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप्॥मेखलाबंधनेवि०॥ॐइयंदुरुक्तात्परिबाधमानावार्मव
रूथंपुनतीनआगात्॥प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं॥ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः॥सान:
समंतमनुपर्येहिभद्रयाभर्तारस्तेमेखलेमारिषामेतिमंत्रंवाचयित्वामेखलांत्रिरावर्त्यनाभिप्रदेशेग्रंथित्रयंकुर्यात्॥नदाबद्धःसरहस्यांग सहित
वेदत्रयेणाप्तोहमितिमन्येत॥ततस्तद्धर्मस्ययोगक्षेमार्थंअधर्मनिवृत्त्यर्थंचकेशसंमितंपलाशदंडंदद्यात्॥स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदे
वास्त्रिष्टुप्॥दंडदानेवि०॥ॐस्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः॥स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचे
तुना॥ततोबटोस्तद्ग्रहणेमंत्रः॥अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयम्॥दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयमितिवाचयेत्॥ततःकुमार
स्याचारमादिशेत्॥ब्रह्मचार्यसि॥अपोशान॥शास्त्रविहितंआचमनंकुरु॥मूत्रपुरीषादौशकृच्छ्यर्थमित्यर्थः॥कर्मकुरु॥संध्योपासनादिकर्मकु
र्वित्यर्थः॥दिवामास्वाप्सीः॥दिवानिद्रांनकुर्यादित्यर्थः॥आचार्याधीनोवेदमधीष्व॥सायंप्रातर्भिक्षेथाः॥सायंप्रातःसमिधमाधेहि॥द्वादशवर्षा
णिवेदग्रहणांतंवा॥ब्रह्मचर्यंचरेति॥प्रैषार्थान्बोधयेत्॥ततःस्विष्टकृदादिहोमशेषंसमाप्याग्निंमेधाजननांतंरक्षेत्॥तत्रैवसायंप्रातरग्निकार्यं

कुर्यात् ॥ ततोऽनुप्रवचनीयहोमब्राह्मणभोजनपर्याप्तांतंडुलरूपांभिक्षांयाचेत् ॥ भिक्षांभवतीददात्विति ॥ इदंप्रथमभिक्षायाम-
न्यत्रभवच्छब्दः पूर्वम् ॥ अथवापितरं भिक्षांभवान्ददात्विति ॥ ॥ तत्रक्रमः ॥ ॥ भिक्षापात्रमादायादौमातरंभवतीभिक्षांद
दात्विति ॥ अथवापितरंभवान्भिक्षांददात्विति ॥ एवंमातुःस्वसारंस्वभगिनीमन्यानपिबांधवानप्रत्याख्यायिनीः प्रत्याख्यायि-
नीश्च याचयित्वा भैक्षमाचार्यायनिवेद्यबहुमध्यान्हसंध्यांकुर्यादिति प्रयोगपारिजाते ॥ नेतिकृष्णभट्टीकारः ॥ ततोब्राह्मणाशि
षांग्रहणं ॥ द्वेशतेशतंवाब्राह्मणाउपनयनेभोज्याः ॥ ततोगुरुसन्निधावचपलस्तिष्ठन्नहः शेषंनीत्वासायंवंदितसंध्यऔपना
यनिकाग्नेरंतिकआसीनःप्राणानायम्यसायमग्निकार्यंकरिष्ये इतिसंकल्प्य परिसमूहनपर्युक्षणेपूर्ववत्समिधमाधाय
त्रिर्मुखंपूर्ववद्विमृज्यउत्कर्षपर्यंतैरुपस्थायमानस्तोकेतिभस्मादायत्र्यायुषमिति तत्तत्स्थानेषुपूर्ववन्हुत्वापुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांज
लिस्तिष्ठन्नोचमइत्युपतिष्ठेत् ॥ अथाचार्योस्तमितेग्नेः पश्चात्स्वासीनःप्राणानायम्यब्रह्मचारिणंदक्षिणतउपवेश्यतिथ्यादिसंकीर्त्यउपनय
नांगभूतमनुप्रवचनीयहोमंकरिष्येइतिसंकल्प्य ॥ अत्रकरिष्यमाणेऽनुप्रवचनीयहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहि
तेग्नाविति आघारावाज्येनेत्यंतमुक्त्वा ऽत्रप्रधानंसदसस्पतिंसवितारमृषीनिति प्रधानदेवताश्चरुद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्य
इत्यंतमुक्त्वाभूर्भुवःस्वःस्वाहेतिसमिधौहुत्वापरिसमूहनादिप्रणीताप्रणयनांतंकृत्वानिरीक्षाद्द्रव्यंचतुरश्चतुरोमुष्टीन्तूष्णींदेवतात्रयस्य

विभक्तयभोजनस्यच पर्याप्तंनिरूप्यतूष्णींप्रोक्ष्यत्रिःफलीकृत्यत्रिःप्रक्षाल्यश्रपयित्वाऽतःस्थालीपाकद्रव्याचार्यायनिवेदयेद्बटुः॥ बटोरे-
वंकरणाशक्तौतद्बंधुनान्येनवाकारयेत्॥ ततोब्रह्मचारिणान्वारब्धोगुरुराज्यसंस्काराद्याघारांतंकृत्वाप्रधानहोमंकुर्यात्॥ अवदानध-
र्मेणावदाय॥ सदसस्पतिमित्यस्यकाण्वोमेधातिथिःसदसस्पतिर्गायत्री॥ अनुप्रवचनीयप्रधानहोमेवि॰॥ ॐसदसस्पतिमद्भुतंप्रियमिं-
द्रस्यकाम्यं॥ सनिंमेधामयासिषंस्वाहा॥ सदसस्पतयइ॰॥ तत्सवितुरित्यस्यगाथिनोविश्वामित्रःसवितागायत्री॥ विनियोगउक्तवत्॥
ॐतत्सवितु॰॥ स्वाहा॥ सवित्रइ॰॥ ऋषिभ्यःस्वा॰॥ ऋषिभ्यइदं॰॥ एवंत्रिभिर्मंत्रैर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यतदवशिष्टान्नेनत्र्यव-
रान्ब्राह्मणान्भोजयित्वातैर्वेदसमाप्तिंवाचयेत्॥ ततोब्रह्मचारीअक्षारालवणमन्नंभुक्त्वाधःशयीत॥ मेधाजननंयावत्तावद्देवगुरुप्रसा-
दयन्वर्तेत॥ यद्यागर्जनाद्यनध्यायशंकातदादिवैवचरुंश्रपयेत्॥ होमस्तुसायंसंध्योत्तरमेवतदानानध्यायदोषः॥ तदुक्तंसंग्रहे॥ नसंध्याग-
र्जितेकालेनदृष्टेस्यु स्यान्नदूषिते॥ ब्रह्मौदनंपचेदग्नौपक्वंचेन्ननिवर्तते॥ तथा॥ ब्रह्मौदनंपचेदन्हिपक्वमन्नंनदुष्यति॥ तथाचोपनयनानुप्रवच-
नीयचरुश्रपणयोरंतरानध्यायेपुनरुपनयनं॥ एषप्रयोगः स्वस्वकालकृतसंस्कारस्य॥ असंस्कृतस्यतुविशेषउच्यते॥ आचार्यउपनयना-
त्पूर्वदिनेबटुनासहमंगलस्नातःप्राणानायम्यतिथ्यादिसंकीर्त्यममकुमारस्यगर्भाधानपुंसवनसीमंतविष्णुबलिजातकर्मनामकरणनि-
ष्क्रमणान्नप्राशनचौलांतानांनवसंस्काराणांकालातिपत्तिदोषपरिहारप्रायश्चित्तद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरिष्यइतिसं-

कल्प्योपलेपादिपूर्णपात्रनिधानांतं कृत्वा विधिवदाज्यं संस्कृत्याघारांतं कृत्वानीनकर्मसंख्यया ॐ भूर्भुवः स्वः स्वाहेत्याज्याहुती हुत्वा स्विष्टकृ-
दादिहोमशेषं समाप्य चौलातिरिक्तसंस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रं चौलाकरणेऽर्धकृच्छ्रं बुद्धिपूर्वकं चौलातिरिक्ताकरणे प्रत्येकमर्धकृ-
च्छ्रं चौलाकरणे कृच्छ्रं बटुना कारयेत् ॥ अशक्तौ तन्नूप्रत्याम्नायत्वेन गोदानतिलहोमसहस्रदशसहस्रगायत्रीजपद्वादशब्राह्मणभोजनादिष्वे-
कं प्रायश्चित्तं कारयित्वाऽतीतानि जातकर्मादीनि कृत्वा पूर्वोक्तप्रकारेणोपनयनतंत्रं सर्वमाचरेत् ॥ उपनयनेन सह चौलकरणे पूर्वेद्युः संस्कार-
द्वयं संकीर्त्य युगपत्स्वस्तिवाचनग्रहयज्ञनांदीश्राद्धानि कृत्वा परेद्युर्मंगलस्नानादि वीत्यादिपात्रचतुष्टयदानांतं पूर्वोक्तं चौलप्रयोगं सर्वं कृत्वा-
पुनस्तिथ्यादि संकीर्त्य उपनयनसंकल्पाद्यनुप्रवचनीयहोमांतं सर्वं कार्यं ॥ ॥ इति श्रीनारायणभ॰ प्रयो॰ उपनयनप्रयोगः ॥ ॥ अथ मे-
धाजननम् ॥ ॥ प्रागुक्तक्रमेणाचरितव्रतस्य ब्रह्मचारिणो मेधासिद्ध्यर्थमाचार्यश्चतुर्थदिवसे मेधाजननाख्यं कर्म कुर्यात् ॥ तत्रायं क्र-
मः ॥ प्रत्यग्वायव्योदक्प्रागुदक्पूर्वान्यतमस्यां दिशि शाखावर्जितं पलाशं तदभावे सशाखं वा तदभावे कुशस्तंबं वा तदसंभवे स्वगृहऐशा-
न्दिग्भागे सर्वतो द्वादशांगुलां त्रिमेखलां वेदिं कृत्वा तस्यां पत्रांकुरसमन्विताम् आर्द्रां पलाशशाखां समूलं कुशस्तंबं वा प्रतिष्ठाप्य ब्रह्मचारिणा-
न्वारब्धः संकल्पपूर्वकं पूजां कुर्यात् ॥ तत्रक्रमः ॥ तिथ्यादि संकीर्त्य मम कुमारस्योपनयनव्रतसमाप्ति वेदग्रहणसामर्थ्यलक्षणमेधा-
सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं मेधाजननाख्यं कर्म करिष्ये इति संकल्प्य ॥ शौनकमते पुण्याहवाचनमपि कृत्वा मेधाजननकर्मणि पू

म॰र॰
५५

वैत्कफलसिद्ध्यर्थं मेधापरनामकसावित्रीपूजां करिष्ये इति संकल्प्य ॥ पलाशशाखायां मेधायै नम इति नाममंत्रेणावाहनाद्युपचारान् कृ-
त्वा यावकसक्तुमोदकमिश्रमन्नं निवेद्य पुनश्च पूर्ववदभ्यर्च्य ब्रह्मचारिणा प्रणमय्याशक्तूजलपात्रोदकेन सेचनं कुर्वता बटुनाग्निः प्रदक्षिणांकार-
यन्मंत्रं वाचयेत् प्रणामयेच्च ॥ ॐ सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु ॥ यथा त्वं देवानां यज्ञस्य निधिपो
स्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति प्रतिप्रदक्षिणं मंत्रावृत्तिं प्रणामं च कारयेत् ॥ ततो ब्रह्मचारी स्नात्वा नवान्यज्ञोपवीताजिनमे-
खलादंडाद्युपनयनवत्समंत्रकं धृत्वा पुराणानि पलाशसन्निधौ विसृज्य पूर्ववद्धृतवाससी गुरवे दत्वा मेधामह्यमिति सूक्तं विप्रैः पाठयित्वा वि-
धिवत्स्वस्तिवाचनं कृत्वा ब्राह्मणेभ्यो दक्षिणां यथाशक्ति दत्वा तान् भोजयित्वा नमस्कृत्याशिषो गृह्णीयात् ॥ अथ मेधामह्यमिति सूक्तं ॥
मेधां मह्यमंगिरसो मेधां सप्तऋषयो ददुः ॥ मेधामिंद्रश्चाग्निश्च मेधां धाता ददातु मे ॥ मेधां मे वरुणो राजा मेधां देवी सरस्वती ॥ मेधां मे अश्विनौ दे-
वावाधत्तां पुष्करस्रजा ॥ या मेधाप्सरस्सु गंधर्वेषु च यन्मनः ॥ दैवी या मानुषी मेधा सा मामाविशतादिमाम् ॥ यन्मे नोक्तं तद्रमतां शकेयं यदनुब्रु-
वे ॥ निशामितं निशामयि मयि व्रतं सह व्रतेषु भूयासं ब्रह्मणा संगमेमहि ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे ॥ अहृद्धमहमसौ सूर्यो ब्रह्मणानि
स्थः श्रुतं मे मा प्रहासीः ॥ मेधां देवीं मनसा रेजमानां गंधर्वजुष्टां प्रति नो जुषस्व ॥ मह्यं मेधां वद मह्यं श्रियं वद मेधावी भूयासमजरा जरिष्णु ॥ सद-
सस्पतिमद्भुतं प्रियमिंद्रस्य काम्यं ॥ सनिं मेधामयासिषं ॥ यां मेधां देवगणाः पितरश्चोपासते ॥ तया मामद्य मेधयाग्ने मेधाविनं कुरु ॥ मेधाव्यं [illegible]

मे॰ज॰

अ
५५
मृद्य

सुमनाःसुप्रतीकःश्रद्धामनाःसत्यधर्मिःसुश्रीवः॥महायशाधारयिष्णुःप्रयुक्ताभूयासमस्यैस्त्वधयाप्रयोगे॥ ॥इतिना०म०प्रयो०मेधाजननं
तदुपनयनप्रयोगः॥ ॥अथमहानाम्न्यादिव्रतानि॥ ॥तत्राद्यंतावत्॥ ॥जन्मप्रभृतित्रयोदशेवर्षेउक्तोदगयनादिकालेमहानाम्नीव्रतंका
र्यं॥पूर्वेद्युराचार्योब्रह्मचारिणासहकृतस्नानःकृतनित्यक्रियःप्राणानायम्यतिथ्यादिसंकीर्त्यैनंब्रह्मचारिणंमहानाम्नीरध्यापयिष्यंस्तदादौ
महानाम्नीव्रतसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमंकरिष्ये॥तदंगतयास्वस्तिवाचनांकुरार्पणग्रहयज्ञाभ्युदयिकश्राद्धानिकरिष्यइति
संकल्प्यपूर्वोक्तवृत्तानिकृत्वापूर्वेद्युर्ब्रह्मचारिणावपनस्नानेकारयित्वाबद्धशिखंतंसुमुहूर्ते स्वदक्षिणतउपवेश्यविधिवत्कौतुकमाबध्य
संकल्पपूर्वकमुपलेपनाद्यग्निप्रतिष्ठांतकर्मकृत्वासमिद्द्वयमादायतिथ्यादिसंकीर्त्यास्यब्रह्मचारिणोमहानाम्नीव्रतांगभूतंहोमंकर्तुंदेवता
परिग्रहार्थमन्वाधानंकरिष्ये॥अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वात्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमि
त्यादिसद्योयक्ष्यइत्यंतमुक्त्वाव्याहृतिभिरग्नावाधाय्योद्देशत्यागौकृत्वापरिसमूहनाद्याज्यसंस्कारांतंकृत्वाअथाचार्यउत्थायाग्नेःपश्चाद
वस्थायब्रह्मचारिणंप्राङ्मुखमवस्थाप्यकौपीनार्थंत्रिवृतंकार्पाससूत्रंकटावाबध्यकौपीनंधारयित्वायुवंवस्त्राणीतिमंत्रावृत्त्वाऽहतंशु
क्लंवासःपरिधाप्यान्येनकाषायवस्त्रेणप्रावृणुयात्॥ततोयज्ञोपवीतंसमंत्रकंधारयित्वातस्मात्प्राग्यो मध्येनयज्ञपात्रोत्तरभागंगमयित्वा
तंत्रविधिवदाचमय्यतथैवानीयोपवेश्यबर्हिष्याज्यासादनांतंकृत्वाब्रह्मचारिणादक्षिणहस्तेनस्पृष्टःसन्नाघारांतंकृत्वाआज्यभागव

र्यमग्न आयूंषीत्यादिभिश्चतुर्भिश्चतस्र आज्याहुतीर्जुहुयात् ॥ अग्न आयूंषीति तिसृणां शतं वैखानसा ऋषयः ॥ अग्निः पवमानो देवता गाय
त्री छंदः ॥ प्रधानाज्यहोमे वि॰ ॥ ॐ अग्न आयूंषि॰ ॐ अग्निर्ऋषिः ॐ अग्ने पवस्व॰ ॥ अग्नये पवमानायेदं न ममेति सर्वत्र त्यागः ॥ प्रजा
पते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ प्रधानाज्यहोमे वि॰ ॐ प्रजापते न॰ प्रजाप॰ ॥ तत आचार्य उत्तरतोऽग्नेः प्राङ्मुखो ब्रह्मचारी चा
चार्याग्न्योर्मध्येन गत्वाचार्यस्य पुरोऽभिमुखस्तिष्ठेत् ॥ ततः आचार्यः संयतः सूर्यात्मा संस्तस्य शक्तिसिद्धये सवितृदेवतानुस्मरयेच्चांजलिक्षार-
णं कुर्यात् ॥ तत्र क्रमः ॥ जलपात्रोदकेन शिष्यांजलिमापूर्य स्वस्यांजलिमन्येन पूरयित्वा ॥ तत्सवितुरित्यस्य श्यावाश्वः सविता नुष्टुप् ॥ अंज-
लिक्षारणे वि॰ ॥ ॐ तत्सवितुर्वृणीमहे वयं देवस्य भोजनं ॥ श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि इति स्वांजलिस्थोदकं शिष्यांजलावासिच्य
तज्जलं बटोरंजलिनैवावक्षारयेत् ॥ तत आचार्यो बटोर्हस्तं गृह्णीयात् ॥ तत्र मंत्रः ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
हस्तं गृह्णाम्यसुक शर्मन्निति बटोरभिवादनिकं नाम शर्मांतं संबुद्ध्या मंत्रांते निर्दिश्य दक्षिणपाणिना साङ्गुष्ठं बटोर्दक्षिणपाणिं गृहीत्वा पुनर-
पि पूर्ववदुदकपूरणादि कृत्वा सविता ते हस्तमग्रभीदिति मंत्रांते पूर्ववन्नाम निर्दिश्य हस्तं गृहीत्वा पुनरपि पूर्ववत् पूरयित्वा अग्निराचार्यस्त
वेति मंत्रांते पूर्ववन्नाम निर्दिश्य हस्तं गृह्णीयात् ॥ ततो बटुं संरक्षार्थं प्रतपतये आदित्याय बटुं ददामीति मनसा स्मरन् दद्यात् ॥ तत्र मंत्रः ॥ ब
टुना सह निष्क्रम्य देव सवितरेष ते ब्रह्मचारी तं गोपाय स मा मृतेत्युक्त्वाचार्यस्तमादित्यमीक्षयेत् ॥ तत उभावप्युत्तरतोऽग्नेः पूर्ववदन्योन्याभिमुखौ ति

ष्टेनाम् ॥ अथाचार्यः कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामीति मंत्रं जपन् ॥ प्रजापतये रक्षणार्थं बटुं मन
सा समर्प्य पूर्ववद्बटुं पविश्य इयं दुरुक्तेति मंत्रेण मेखलामाबध्य ॥ अदांतं दमयित्वा मां मार्गे संस्थापयन्स्वयं ॥ दंडः करे स्थितो यस्मात्तस्माद्रक्ष
यतो भयमिति दंडं प्रदाय पुराणानि यज्ञोपवीतादीनि जले निक्षिप्य स्विष्टकृदादि होमशेषं समापयेत् ॥ अथ गुरुणा महानाम्नीव्रतं चरेति
ब्रह्मचारी प्रेषितश्चरिष्यामीत्युक्त्वा संवत्सरपर्यंतं केशश्मश्रुनखलोमधारणभिक्षाचरणादिव्रतं पूर्ववच्चरेदिति । पूर्णे वर्षे उदगयने शुक्लप
क्षे बटुर्गुरोर्महानाम्नीः श्रोष्यन् ग्रामाद्बहिर्विविक्ते शुचिदेशे देवालयादि गच्छेत् ॥ तत्र गुरुस्तिथ्यादि संकीर्त्यास्य ब्रह्मचारिणो महानाम्नीश्र
वणाधिकारसिद्ध्यर्थं व्रतपरिपूर्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं तदंगहोमं कर्तुमुपलेपादिकं करिष्य इति संकल्प्य स्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनांतं कृत्वा
पुनस्तिथ्यादि संकीर्त्यास्मिन्होमे देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा अग्निं संराधनीं अग्निमग्निं सूर्यं
तीमनुमतिं प्रदातारमग्निं वायुं सूर्यं प्रजापतिं सदसस्पतिं शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्वाधाय परिसमूहनादि पूर्णपात्रनिधानांतं कुर्या
त् ॥ ततो बटुः स्थालीपाकविधानेन होमायात्मभोजनाय च पर्याप्तांस्तंडुलान्निर्वपन्यो देवताभ्यस्तूष्णीं निरूप्य तथैव प्रोक्ष्य महानाम्नीदेवता
प्रीत्यर्थं तत्र तिलान्प्रक्षिप्य श्रपयित्वा आचार्याय भृतः स्थालीपाक इति विज्ञापयेत् ॥ तत आचार्यो ब्रह्मचारिणं व्रतलोपान्पृष्ट्वा तेन व्रतलोप
उक्ते तस्य गौरवलाघवे विचार्य गुरुश्चेदत्रोक्तप्रायश्चित्तं कारयित्वा पुनः संवत्सरव्रतमादिशेत् ॥ लघुश्चेत्प्रायश्चित्तमेव कारयित्वा शुद्धेन तेना

न्वारब्धेआज्यसंस्काराद्याज्यभागांतंकृत्वावदानधर्मेणचरुमवदायाग्नावग्निरित्यादिभिरेकश्रुत्योक्तैःषण्मंत्रैर्व्यस्ताभिर्व्याहृतिभिश्चनवाहुती
र्जुहुयात्॥ नेचमंत्राः॥ अग्नावग्निश्चरतिप्रविष्टऋषीणांपुत्रोअधिराजएषः॥ नस्मैजुहोमिहविषाघृतेनमादेवानांमोमुहद्भागधेयंमोअस्माकं
मोमुहद्भागधेयंस्वाहा॥ अग्नयइ॰१ यास्तिरश्चीनिपद्यतेहंविधरणीइति॥ तांत्वाघृतस्यधारयायजेसंराधनीमहंस्वाहा॥ संराधन्याइदं॰२ य
स्मैत्वाकामकामायवयंसम्राड्यजामहे॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा॥ अग्नयइ॰३॥ अयंवोअग्निर्वरिवःकृणोत्वयंमृधःपुरए
तुप्रभिंदन्॥ अयंशत्रूञ्जयतुजर्हृषाणोयंवाजंजयतुवाजसातौस्वा॰ अग्नयइ॰४॥ असूयंस्यैचानुमत्यैचस्वा॰॥ असूयंस्यैचानुमत्याइ॰५॥
प्रदात्रेस्वा॰॥ प्रदात्रइदं द्राय॰॥ ६ ॐ भूःस्वा॰॥ अग्नयइ॰॥ ७॥ ॐ भुवःस्वा॰॥ वायवइ॰॥ ८ ॐ स्वःस्वाहा॥ सूर्यायइ॰॥ ९ एवंनवाहुतीर्हुत्वा
स्विष्टकृदर्थंस्त्रुचिचरुमवदायतांबर्हिषिनिधायब्रह्मचारिणंशास्ति॥ एवंस्थालीपाकंसर्वमशानेति॥ सचसर्वंचरुमश्नीयात्॥ आचार्योभुक्त
वंतमाचांतवंतंप्रतवंतमादित्यंव्रतपूर्तयेउपतिष्ठस्वेतिप्रेष्येत्॥ ततःसःत्वंव्रतानांव्रतपतिरसिव्रतंचरिष्यामितच्छकेयंतेनशकेयंतेनराध्यासमि
त्यादित्यमुपतिष्ठमानोद्भिःपूर्णांजलिंसिंचेत्॥ तदाचार्यस्तेनमंत्रेणाकृतांजलिंबटुमादित्यमुपस्थापयेत्॥ ततःअनालोक्यालोकनासंभाष्या
संभाषणानिवृत्तयेबटुनाक्षिसंमीलनंवाग्यमनंचकारयित्वात्रयस्त्रिंशद्देवताभीरक्षार्थंवेदत्रयमनुस्मरन्॥ अहतेनवाससाबटोर्मुखसहितंशि
रोवामकर्णदेशमारभ्यत्रिःप्रदक्षिणंवेष्टयित्वायथातद्वासोनपततितथावस्थाप्यएकरात्रंत्रिरात्रंवैवंभूतोस्वपन्भवेतिप्रेष्यस्विष्टकृदादिहोम

शेषंसमापयेत् ॥ बटुस्त्ववश्यकर्तव्यसंध्यावंदनादन्यत्स्नानभोजनाद्यकुर्वाण[illegible]कालंनयेत् ॥ ततएकरात्रपक्षेद्वितीयदिनेग्रामाद्बहिरपराजितायां
दिशिस्थले संचारशून्येशुचौदेशेअन्योब्रह्मचारीअग्निस्थंडिलादुत्तरतोसिक्तमुदककमंडलुमश्मानंचनिधायतत्प्रत्यगुदग्देशेमहानाम्न्यसंश्रव
णस्थलेपिसंगतानांयोगिनामाश्रयार्थरम्याश्रयार्थरम्यांरक्तांद्विवर्षांवत्सतरींतदसंभवेश्वेतांवाबध्वाचार्यायनिवेदयेत् ॥ ततआचार्यस्तत्स्थं
डिलेउल्लेखनादिपूर्युक्षणांतमग्निप्रतिष्ठापनांतंकृत्वातत्पश्चात्प्रागग्रेषुतृणेषुऐशानस्थान्देवान्समानयन्निवतदभिमुखउपविशेत् ॥ ततः
शिष्योवेष्टितवस्त्रःकिंचिदपसार्यमुखंप्रक्षाल्यकंठस्नानंकृत्वाचम्याचार्यंसमिंचप्रदक्षिणीकृत्यगुरुमभिवाद्यतस्यैवासनदर्भमूलेषेवनेत्रेनिस्थ
नराक्षसान्निरीक्षणेननिर्दहन्स्तदभिमुखउपविश्यरक्षसांसंतरागमननिर्हरणार्थंस्वपृष्ठमाचार्यपृष्ठेनसहसंधायमहानाम्नीर्मेभिनुब्रूहीतिम
नसागुरुंवदेत् ॥ ततोगुरुःकालप्रमाणेनतद्भक्तिंज्ञात्वापुनस्तदहरुत्पन्नश्चतलोपान्पृष्ठान्नुनापिनेश्रद्धानायबटवेस्वयमाक्षिणीसंमील्याविदाम
घवन्निस्थाधानवर्चःएवाह्येवैवाह्यग्नाइत्यादिनवपुरीषपदानिचत्रिवारंब्रूयात् ॥ शिष्योपित्रिवारंपठेत् ॥ ततस्तस्यशिरोवेष्टनमुत्सुच्यादित्य-
मीक्षस्वेतिवदेत् ॥ ततोबटुर्मित्रस्यत्वाचक्षुषाप्रतीक्षेमित्रस्यत्वाचक्षुषासमीक्षइतिमंत्रद्वयेनादित्यमवेक्षेत ॥ ततोस्यादित्यंभास्वतांदिशोभि
त्रस्यवश्चक्षुषानुवीक्षेइतीक्षेत ॥ पुनरादित्यमीक्षस्वेत्युक्तेमित्रस्यत्वाचक्षुषाप्रतिपश्यामियोस्मान्द्वेष्टियंचवयंद्विष्मस्तंचक्षुषोर्हेतुंकृत्वाच्छ-
लित्वादित्यमीक्षेत ॥ ततोग्नइळेत्याद्यष्टमंत्रैर्भुवमुपस्पृशेत् ॥ तेचमंत्राः ॥ ॐ अग्नइळानमइळानमऋषिभ्योमंत्रकृद्भ्योमंत्रपतिभ्योनमोवोऽ

स्तुदेवेभ्यः ॥ शिवानः शंतमाभवस्कमृळीकासरस्वतिमातेव्योमसंदृशि ॥ भद्रंकर्णेभिरितिराहूगणोगोतमोविश्वेदेवा स्त्रिष्टुप् ॥ भूमिस्पर्शनेविनियोगः ॥ शंनइंद्राग्नीतिवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ स्तुषेजनंसुव्रतमित्युजिश्वोविश्वेदेवा- स्त्रिष्टुप् ॥ कयानश्चित्रइतितृचस्यवामदेवइंद्रोगायत्री ॥ स्योनापृथिवीमेधातिथिर्भूमिर्गायत्री ॥ एतैर्मंत्रैर्भूमिंस्पृष्ट्वावत्सतरींगुरवेदत्वानुप्र वचनीयार्थमुपनयनवत्तंडुलान्भिक्षित्वागुरवेनिवेद्यदिवैवब्रह्मौदनहोमंकुर्यात् ॥ तत्रक्रमः ॥ देशकालौनिर्दिश्यममहानाम्न्यध्ययनांगभूत मनुप्रवचनीयहोमंकरिष्यइतिसंकल्प्योल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वापुनर्देशकालौनिर्दिश्यात्रानुप्रवचनीयहोमेदेवतापरिग्रहार्थमन्वाधा नंकरिष्यइत्याद्याघारावाज्येनेत्यंतमुक्त्वासदसस्पतिमहानाम्नीःऋषींश्चएताःप्रधानदेवताश्चरुद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्य- इत्यंतमुक्त्वासमिद्द्वयमादायोद्देशत्यागौकृत्वापरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाभ्युक्षणंतंडुलांश्चतुरश्चतुरोमुष्टींस्तूष्णींदेवतात्रयस्य- विप्रत्रयभोजनायचनिरूप्यतथैवप्रोक्ष्यश्रपयित्वाश्रृतांनुप्रवचनीयइतिगुरवेनिवेदयेत् ॥ ततःशिष्येणान्वारब्धआज्यसंस्काराद्याघारांतंकृ त्वाज्यभागवर्ज्यमवदानधर्मेणचरुमवदायसदसस्पतिंकाण्वोमेधातिथिःसदसस्पतिर्गायत्री ॥ अनुप्रवचनीयप्रधानचरुहोमेवि॰ ॥ ॐसद सस्पतिमद्भुतं॰सिषंस्वा॰ ॥ सदसस्पतयइ॰ ॥ इतिप्रथमाहुतिंमहानाम्नीभ्यःस्वाहेतिद्वितीयांऋषिभ्यःस्वाहेतितृतीयाहुतिंहुत्वास्विष्टकृ दादिहोमशेषंसमाप्यकर्मांतकर्तव्यस्वस्तिवाचनंकृत्वाब्राह्मणान्भोजयित्वावेदसमाप्तिरस्त्वितिभवंतोब्रुवंत्वितितानन्वदेत् ॥ तपिवेदसमा

मिरस्त्विति प्रतिब्रूयुरिति ॥ ॥ इति श्रीनारायणभ० प्रयो० महानाम्नीव्रतप्रयोगः ॥ ॥ अथ महाव्रतप्रयोगः ॥ ॥ आचार्यः पूर्ववदुदगयना
दौ स्वस्तिवाचनादि होमशेषं समाप्य तं महानाम्नीव्रतवत् कृत्वा संवत्सरं महाव्रतमाचरेति बटुं प्रेष्य तेन संवत्सरव्रत आचरिते ग्रामाद्बहिः शकृत्पिण्डे दे
शे प्रागग्रेषु दर्भेषु प्राङ्मुख उपविश्य शिष्येण विधिवदभिवादनपूर्वकं महाव्रतं भो अनुब्रूहीति वचनेनैवोक्तस्तं प्राङ्मुखं उपवेश्य अथ महाव्रतमि
त्यारण्यकं त्रिर्ब्रूयात् ॥ ततः शिष्यस्तथैव त्रिवारमुक्त्वा पूर्ववन्मंत्रहूयेनादित्यमवेक्षेत् ततो गुरुशिष्यावपइळ्यादिभिर्मंत्रैर्भूमिं स्पृशेताम् ॥ त
तः शिष्यो दिग्भ्यो ब्रह्मौदनं श्रपयित्वाचार्याय निवेदयेत् ॥ तत आचार्यो महानाम्नीभ्यः स्वाहेतिस्थाने महाव्रताय स्वाहेति द्वितीयाहुतिं हुत्वा सर्वमनु
प्रवचनीयं कुर्यात् ॥ इति महाव्रतप्रयोगः ॥ ॥ अथोपनिषद्व्रतप्रयोगः ॥ ॥ आचार्यः पूर्ववद्धोमं समाप्य तं महानाम्नीव्रतवत्कृत्वा संवत्सर
मुपनिषद्व्रतमाचरेति बटुं प्रेष्य तेन तथा व्रते कृते प्राग्वदुपनिषदं भो अनुब्रूहीत्युक्तस्तं प्राङ्मुखमथातः संहिताया उपनिषदित्यारण्यकं त्रिर्ब्रूयात् ॥
शिष्यस्तथैव त्रिरुक्त्वा पूर्ववदादित्यावेक्षण भूस्पर्श ब्रह्मौदनश्रपणनिवेदनानि कुर्यात् ॥ तत आचार्यो महाव्रतस्थाने उपनिषदे स्वाहेति हुत्वा पू
र्ववदनुप्रवचनीयं कुर्यात् ॥ आचार्याभावे शिष्यः स्वयमेव महाव्रताध्ययनादिकं कुर्यादिति ॥ इत्युपनिषद्व्रतं ॥ ॥ इति प्रयोगरत्ने महानाम्न्यादि
व्रतत्रयं ॥ ॥ अथ गोदानप्रयोगः ॥ ॥ जन्मतः षोडशे वर्षे उदगयने शुक्लपक्षे चौलोक्ततिथ्यादौ गोदानं कुर्यात् ॥ तत्र पूर्वेद्युराचार्यः कृतनित्य
क्रियः कृतस्नानो ब्रह्मचारिणं स्वदक्षिणत उपवेश्य प्राणानायम्य तिथ्यादि संकीर्त्यास्य ब्रह्मचारिणो गोदानं कर्तुं तदंगं स्वस्तिवाचनांकुरार्पणग्रह

यज्ञाभ्युदयिकानि करिष्य इति प्रत्येकं संकल्प्य तानि क्रमेण कृत्वा परेद्युः कृतनित्यक्रियः कृतनित्यक्रियं बटुं दक्षिणत उपवेश्य कौतुकमाबध्य स्वगृह्य
नैउपलेपनाद्यग्निप्रतिष्ठापनांतं कृत्वा पुनर्देशकालौ स्मृत्वा मया क्रियमाणे गोदानहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ अस्मिन्नन्वाहिते ग्ना-
वित्या द्यावाघारावाज्येनेत्यंतमुक्त्वाग्निरग्निं पवमानं प्रजापतिं चैताः प्रधानदेवता आज्येन शेषेण स्विष्टकृतमित्याद्युक्त्वा समिद्द्वयमग्नावाधाय पूर्ण-
पात्रनिधानांतं कृत्वोदगग्नेरास्तीर्णदर्भेषु व्रीहियवमाषतिलैः पृथक्पृथक्पूरितनवशरावचतुष्टयं क्रमेणैकैकशः प्राक्संस्थमासाद्य प्रत्यगग्नेरा
सीनस्य कर्तुर्दक्षिणतो बटोर्माता प्राङ्मुख्यासीत ॥ मातुः पुरस्तादग्नेः पश्चादानडुहं शकृच्छरावं शमीपर्णशरावं च संस्थापयेत् ॥ ततो ब्रह्मैक
विंशतिकुशांकुरान्दधानो मातुर्दक्षिणोतिष्ठेत् ॥ ततो बटुनान्वारब्धः कर्ता पूर्ववत्तत्रमाघारांतं कृत्वा अग्न आयूंषीत्यादिचतुर्भिर्मंत्रैः पूर्ववदाज्याहु
तीर्हुत्वा हुतशेषत्यागौ कृत्वा शीतोष्णजलपात्राभ्यां पृथगानीय बटोः पश्चिमतः स्थित्वा तदुदकमन्यस्मिन्पात्रे ~~[struck]~~ पाणिभ्यां उष्णेन वाय उदकेनेहीति युगप
न्निनीय तदेकदेशं नवनीतेन दध्ना वा मेलयित्वा बटोर्वामश्मश्रुप्रदेशमारभ्य प्रदक्षिणमादितिः श्मश्रूणि वपत्वाप उंदंतु वर्चस इति मंत्रत्रयस्य त्रिः श्म
श्रूण्येव क्लेदयित्वा ब्रह्महस्तस्थैकविंशतिकुशांकुरेषु त्रीनंकुरानादाय बटोरभिमुखं पश्चिमाग्रान्कृत्वोषधे त्रायस्वैनमिति दक्षिणपार्श्वश्मश्रुभागे नि
धाय तेष्वंकुरेषु ताम्रमयक्षुरं स्वधिते मैनं हिंसीरिति निधाय ॐ येनावपत्सविताक्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्माणो वपतेदम
स्यायुष्मांजरदष्टिर्यथासदिति स श्मश्रुकान्कुशांकुरांश्छित्त्वा प्रागग्रानुद्शरावशमीपर्णैरेकीकृत्य मातुः करे दद्यात् ॥ सा च तानानडुहे गोमये प्रा

गधान्विदध्यात्॥ एवंद्वितीयादिछेदनेकुशांकुरत्रयनिधानादिसमंत्रकंकार्यं ॥ विशेषस्तु॥ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत्॥ तेनतआयु
षेवपामिसश्लोक्यायस्वस्तयइतिमंत्रोद्वितीयच्छेदने॥ येनभूयश्चराव्यांज्योक्चपश्यातिसूर्यं॥ तेनतआयुषेवपामिसश्लोक्यायस्वस्तयइतितृतीय
छेदने॥ चतुर्थेत्वेतेत्रयोपिमंत्राः॥ एवंदक्षिणश्मश्रुभागेचत्वारिछेदनानिकृत्वोत्तरभागेप्येवंत्रीणिछेदनान्यादितोमंत्रत्रयेणकुर्यान्नचतुर्थं॥ ततः
क्षुरधारां॥ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिश्मश्रूणि, शुंधिशिरोमुखंमास्यायुःप्रमोषीरित्यग्रत आरभ्यामूलमवमृज्यनापितमाहूयशी
तोष्णाभिरद्भिरखर्थंकुर्वाणोऽक्षण्वन्कुशलीकेशश्मश्रुलोमनखान्युदक्संस्थानिकुर्विति प्रेष्यतंप्रेषार्थंचाववोध्यतेननपूर्ववसंकावशिष्टैःशीतोष्णां
बुभिरग्रपाणिनार्द्रीकृत्यकेशश्मश्रुलोमनखान्युदक्संस्थानिवापयित्वास्नातंबटुंपूर्ववद्उपवेश्यस्विष्टकृदादिहोमशेषंसमाप्यतद्रीत्यादिपात्र
चतुष्टयंनापितायदद्यात्॥ ततोबटुरहःशेषंमौनेननीत्वावंदितसायंसंध्योगुरोरंतिकंगत्वावरंददामीतिवाचंविसृज्यतस्मादनड्वाहंगांचदक्षिणा
त्वेनयाचयित्वावादद्यात्॥ ततःपरंशुःसंवत्सरंगोदानव्रतमाचरेत्स्याचार्येणोक्तेब्रह्मचारीसंवत्सरंकेशश्मश्रूणिधृत्वापूर्वोक्तब्रह्मचारीनियमे
नगुरुसमीपेव्रतंचरेत्॥ ॥ इतिश्रीभट्टरामेश्वरसूनुनारायणभट्टकृतेप्रयोगरत्नेगोदानव्रतप्रयोगः॥ ॥ अथब्रह्मचारिव्रतलोपप्राय
श्चित्तं॥ ॥ तत्रबौधायनः॥ ॥ अत्रशौचाचमनसंध्यावंदनदर्भपाणिभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवी
तमेखलादंडाजिनत्यागदिवास्वापछत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनाऽनुलेपनांजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिर

तिपारवंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपजसकलदोषपरिहारार्थंब्रह्मचारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहोमंचकुर्यात् ॥ तद्यथा
लौकिकाग्निंप्रतिष्ठाप्यान्वाधानाज्यभागांतंकृत्वाप्रथमंव्यस्तसमस्तव्याहृतिभिश्चतस्रआज्याहुतीर्हुत्वा ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वा०
॥५॥ ॐ भुवोवायवेचांतरिक्षायमहतेचस्वा० ॥६॥ ॐ स्वरादित्यायचदिवेचमहतेचस्वा० ७ ॐ भूर्भुवस्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च
महतेचस्वा० ॥८॥ ॐ पाहिनोअग्नएनसेस्वा० ॥९॥ ॐ पाहिनोविश्ववेदसेस्वा० ॥१०॥ ॐ यज्ञंपाहिविभावसोस्वा० ॥११॥ ॐ सर्वंपाहिशतक्र-
तोस्वा० ॥१२॥ ॐ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाह्यंहसःस्वाहा ॥१३॥ ॐ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्व
तस्परिस्वा० ॥१४॥ पुनर्व्याहृतिभिर्हुत्वास्विष्टकृदादिहोमशेषंसमापयेदिति ॥ एतदल्पधर्मलोपेप्रायश्चित्तं बहुधर्मलोपेतुप्रायश्चित्तविशेषो
ऋग्विधानेशौनकेनोक्तः ॥ तंवोधियाजपेन्मंत्रंलक्षंचैवैशिवालये ॥ ब्रह्मचारीस्वधर्मेचन्यूनंचेत्पूर्णमेवतदिति ॥ महानाम्न्यादिव्रतेषुलुप्तेषु
तारतम्येनत्रीन्षड्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतमारभेतेतिस्मृत्यर्थसारे ॥ ॥ इतिप्रयोगरत्नेब्रह्मचारिव्रतलोपप्रायश्चित्तं ॥ ॥ अथसमा
वर्तनप्रयोगः ॥ ॥ आचरितब्रह्मचारिनियममहानाम्न्यादिव्रतचतुष्टयोब्रह्मचारीविद्यांतेगुरुमर्थदानेनसंपूज्यतेनानुज्ञातोज्योतिर्विदोक्तेशु
भकालेआचार्यगृहेसमावर्तनंनामकर्मकुर्यात् ॥ ब्रह्मचारिनियमव्रतचतुष्टयलोपपक्षेप्रायश्चित्तंकृत्वाऋत्वःसन्निदंकुर्यात् ॥ तत्रायंक्रमः ॥ पू
र्वेद्युस्तिथ्यादिसंकीर्त्यममशौचाचमनादिसर्वब्रह्मचर्यनियमलोपप्रायश्चित्तद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमाचरिष्येइतिसं

कल्प्य लौकिकाग्निं प्रतिष्ठाप्याज्यहोमधर्मेणान्वाधानपूर्वकं पूर्वोक्ताष्टादशाज्याहुतीर्हुत्वा कृच्छ्रत्रयप्रत्याम्नायत्वेन कल्पितगोदानसहस्रतिलहोमद
शसहस्रगायत्रीजपादिष्वन्यतमं चरित्वा होमशेषं समापयेत् ॥ महानाम्न्यादिव्रतलोपपक्षे प्रत्येकं गायत्र्याशतसंख्यौष्टाविंशतिमष्टौ वाज्याहुती
र्हुत्वा एकैकं कृच्छ्रं चरित्वा शुभदिने महानाम्नीव्रतं कृत्वा तथैव महाव्रतादिव्रतत्रयं कृत्वा गुरवे दक्षिणां दत्वा तेनानुज्ञातो मण्यादीन्येकादशोपक
ल्पयेत् ॥ तानि च मणिः कुंडले वस्त्रयुगं छत्रं सुपानद्युगं दंडः स्रजं एकबीजकरंजफलपिष्टं श्रीखंडाद्यनुलेपनमंजनमुष्णीषमिति ॥ एतान्यात्मने
चाचार्याय च यद्युभयोर्न विंदेताचार्यायैव संपाद्यानि ॥ यस्मिन्नहनि समावर्तनं तस्मिन् प्रातरपराजितां दिशं गत्वा यज्ञियवृक्षस्यैशानीं शाखां
छित्वात्मप्रादेशाभितां समिधमाहृत्य भूमेरन्यत्रोपरि निदध्यात् ॥ तत्र क्रमः ॥ ब्रह्मचारी कृतनित्यक्रियः कृत प्रातरग्निकार्यश्च प्राणानायम्य तिथ्यादि
संकीर्त्य मम गृहस्थाद्याश्रमांतरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनं करिष्ये इति संकल्प्य तदंगभूतं स्वस्तिवाचनांकुरार्पणग्रहयज्ञाभ्युद
यिकानि संकल्पपूर्वकं कृत्वा प्रागुक्तलक्षणां समिधमाहृत्योपरि निधाय ब्रह्मचर्यव्रतसंपूर्त्यर्थं ब्राह्मणाय गां दत्वा द्विजान् भोजयित्वा विधिवत्कौ
तुकं माबध्य शुभकाले स्थंडिले उल्लेखनाद्यग्निप्रतिष्ठापनांतं कृत्वा पुनर्देशकालौ निर्दिश्य मया क्रियमाणे समावर्तनहोमे देवतापरिग्रहार्थमन्वा
धानं करिष्ये ॥ अस्मिन्नन्वाहितेग्नाविध्माद्याघारावाज्येनेत्यंतमुक्त्वा त्रिवारमग्निं पवमानं प्रजापतिं चैताः प्रधानदेवता आज्येन अग्निं सूर्यं समि-
धा विश्वान्देवान्दश वा समिद्भिः शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यंतमुक्त्वा समिद्धमग्नावाधाय पूर्णपात्रनिधानांतं पुरस्तनं तंत्रमनुष्ठायोद

गग्नेरास्तीर्णेषु दर्भेषु व्रीहियवमाषतिलैः पृथक् पूरितानि चत्वारि शरावाणि क्रमेणैकैकशः प्राक्संस्थान्यासादयेत् ॥ ताम्रमयं लोहं वा क्षुरं शीतमुष्णं
चोदकं नवनीतं दधि द्रप्सान्वा सम्पाद्यैकां बहुशद्रव्याणि चाग्नेरुत्तरत आसादयेत् ॥ ततः प्रत्यग्ग्नेरासीनस्य कर्तुर्दक्षिणतो माता प्राङ्मुखी आसीत ॥
तस्याः पुरः अग्नेः पश्चात् एकस्मिन् शरावे शमीपर्णान्यपरस्मिन्नानडुहं गोमयमासादयेत् ॥ ततो ब्रह्मैकविंशतिकुशाङ्कुरान् दधानो मातुर्दक्षिण
तस्तिष्ठेत् ॥ ततो ब्रह्मचारी पुरस्तनं तन्त्रमाघारान्तं हुत्वा अग्न आयूंषीति तिसृणां शतं वैखानसा ऋषयः ॥ अग्निः पवमानो ग्निर्गायत्री ॥ प्रधानाज्यहोमे
वि॰ ॥ ॐ अग्न आयूंषि पवस आसुवोर्जमिषं च नः ॥ आरे बाधस्व दुच्छुनां स्वाहा ॥ अग्नये पवमानायेदं न ममेति त्यागः ॥ एवमग्रेपि ॥ ॐ अग्निर्ऋ
षिः पवमानः पांचजन्यः पुरोहितः ॥ तमीमहे महागयं स्वा॰ ॥ २ ॥ ॐ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं ॥ दधद्रयिं मयि पोषं स्वा॰ ॥ ३ ॥ प्रजापते
हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ होमे वि॰ ॥ ॐ प्रजापते॰ ततो ब्रह्माशीतोष्णवारिणी पात्राभ्यां पृथगानीय बटोः पश्चिमदेशे स्थित्वा तदुदकम-
न्यस्मिन्पात्रे ॐ उष्णेन वाय उदकेनेहीति मंत्रेण युगपन्निनीय तदेकदेशं गृहीत्वा नवनीतेन दध्ना वा मिश्रयित्वा बटोर्वामश्मश्रुप्रदेशमारभ्य प्र-
दक्षिणं ॥ ॐ अदितिः श्मश्रूणि वपत्वाप उदन्तु वर्चसे ॥ इति मंत्रं प्रति कुंदनमावर्तयन् त्रिवारं श्मश्रूण्येव क्लेदयित्वा स्वहस्तस्थितेषु एकविंशति-
कुशाङ्कुरेषु त्रीनङ्कुरानादाय दक्षिणश्मश्रुभागं ब्रह्मचार्यभिमुखं पश्चिमाग्रं निदध्यात् ॥ तदा ब्रह्मचारी ॐ ॐ षधे त्रायस्वमामिति जपेत् ॥ त
तो ब्रह्मा तेषु कुशाङ्कुरेषु ताम्रमयं क्षुरं निदध्यात् ॥ तदा ब्रह्मचारी स्वधिते मामा हिंसीः ॥ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुण

स्यविद्वान् ॥ तेनब्रह्मणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासदितिजपेत् ॥ ततोब्रह्मचारिणायेनावपदितिमंत्रेउच्चारितेब्रह्मास्मश्रुकान्कुशांकुरां
श्छित्वातानंकुरान्भागग्रान्छरावस्थशमीपर्णैःसहैकीकृत्यमातुःकरेदद्यात् ॥ साचतान्सश्मश्रुशमीपर्णकुशांकुराननडुहेगोमयेनिदध्या
त् ॥ एवंद्वितीयादिछेदनेषुकुशांकुरत्रयनिधानादिसमंत्रकंकार्यं ॥ छेदनमंत्रेतुविशेषः ॥ ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनमआयुषेव
पामिसुश्लोक्यायस्वस्तयइतिद्वितीयछेदनेमंत्रः ॥ ॐ येनभूयश्चरात्र्यांज्योक्चपश्यामिसूर्यं ॥ तेनमआयुषेवपामिसुश्लोक्यायस्वस्तयइतितृतीय-
छेदने ॥ चतुर्थेतु ॥ ॐ येनावपत्० ॐ येनधाता० ॥ ॐ येनभूयश्चेतित्रयोपिमंत्राः ॥ एवंदक्षिणश्मश्रुभागेचत्वारिछेदनानिकृत्वोत्तरश्मश्रुभा-
गेप्यनयारीत्याद्यानित्रीणिछेदनानिप्रत्येकंमंत्रैःकुर्यात् ॥ नतुसर्वमंत्रैश्चतुर्थं ॥ ततःक्षुरधारां ॥ यत्क्षुरेणमर्चयतासुपेशसावप्तावपासिश्म
श्रूणि ॥ शुंधिशिरोमुखंमामआयुःप्रमोषीरित्यनेनाग्रतआरभ्यामूलमवमृज्यनापितमाहूय ॥ शीतोष्णाभिरद्भिरबर्थंकुर्वाणोक्षणवन्कुशली
कुर्वितिप्रैषेणानुशास्यप्रैषार्थंचावबोध्यनापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृत्यकेशश्मश्रुलोमनखान्युदक्संस्थानिवापयित्वातद्व्रीह्या
दिशरावचतुष्टयंनापितायदद्यात् ॥ ततःकरंजबीजपिष्टेनस्वशरीरमुद्वर्त्यशीतोष्णैरुदकैःस्नात्वाद्विराचम्यपुनर्वन्हेरंतिकंगत्वाएकंवस्त्रंसमंत्र
कंपरिधायान्यद्वस्त्रंप्रावृणुयात् ॥ तत्रमंत्रः ॥ युवंवस्त्राणीत्यस्यदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ वासोधारणेवि० ॥ ॐ युवंवस्त्रा० ॥ ततोद्विराचम्य
पाणिनांजनमादाय ॐ अश्मनस्तेजोसिचक्षुर्मेपाहीतिमंत्रावृत्यासव्यदक्षिणचक्षुषीक्रमेणांक्त्वातथैव ॥ ॐ अश्मनस्तेजोसिश्रोत्रंमेपाहीत्य

नेनकुंडलाभ्यांदक्षिणसव्ययोःश्रोत्रेअलंकृत्यकुंकुमाद्यनुलिप्ताभ्यांपाणिभ्यांपूर्वंमुखमनुलिप्यपश्चादितरांगान्यनुलिप्यकरौप्रक्षाल्य ॐ अनार्तास्त्व-
नार्तोहंभूयासमित्यनेनशिरसिस्रजंबध्वा ॐ देवानांप्रतिष्ठेस्थःसर्वतोमापातमित्यनेनचर्ममय्यावुपानहौदक्षिणसव्यपादाभ्यामारुह्य ॐ दिव-
श्छद्मासीतिमंत्रेणछत्रंधृत्वा ॥ ॐ वेणुरसिवानस्पत्योसिसर्वतोमापाहीतिवैणवंदंडंगृहीत्वा ॥ आयुष्यमितिसूक्तेनसुवर्णमणिंकंठेबध्नीयात् ॥
आयुष्यमितिसूक्तस्यसनकसनंदनसनातनाद्यऋषयः ॥ हिरण्यंदेवता आद्याश्चतस्रोनुष्टुभः ॥ पंचमीत्रिष्टुप्षष्ठ्यनुष्टुप्सप्तमीशाक्करी ॥ अ-
ष्टमीनवम्यौत्रिष्टुभौदशम्यनुष्टुबेकादशौजगती ॥ कंठेमणिधारणेवि॰ ॥ ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं ॥ इदंहिरण्यंवर्चस्वज्जैत्रायावि-
शतादिमाम् ॥ उच्चैर्वाजिपृतनाषाट्सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्त्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्र-
भ ॥ तेनमांसूर्यत्वचमकरंपुरुषुप्रियं ॥ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजातंपरि-
यद्धिरण्यममृतंजज्ञेअधिमर्त्येषु ॥ यएनद्वेदसइद्देनमर्हतिजरामृत्युर्भवतियोबिभर्ति ॥ यद्वेदराजावरुणोयद्वुदेवीसरस्वती ॥ इंद्रोयद्वृत्रहावेद
तन्मेवर्चसआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजःप्रथमजंह्ये३तत् ॥ योबिभर्तिदाक्षायणंहिरण्यंसदेवेषुकृणुतेदीर्घमायुःस
मनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमानाः ॥ तन्मआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत्
घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नानधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषुप्रियंराजसुमा-

त्रिष्टुप्

अर्वांचमिंद्रममुतोहवामहे०

कुरु॥ प्रियंविश्वेषुगोत्रेषुमयिधेहिरुचारुचं॥ अग्निर्येनविराजतिसूर्योयेनविराजति॥ विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकु
रु॥ अनंतरसुष्णीषेनप्रादक्षिणयेनशिरःसंवेष्ट्यउपानहौसंत्यज्यउपरिनिहितांप्रागुक्तांसमिधंगृहीत्वातिष्ठन्नेवस्मृतंचमेइत्यादीन्स्वाहांतान्मंत्रा
नुक्त्वाग्नावादध्यात्॥ एषांमंत्राणांप्रजापतिरग्निरृषिः॥ समिदाधानेवि०॥ ॐस्मृतंचमेअस्मृतंचमेतन्मउभयव्रतं॥ निंदाचमेअनिंदाचमेतन्मउभ
यव्रतं॥ विद्याचमेअविद्याचमेतन्मउभयव्रतं॥ श्रद्धाचमेअश्रद्धाचमेतन्मउभयव्रतं॥ प्रज्ञाचमेअप्रज्ञाचमेतन्मउभ०॥ इष्टंचमेअनिष्टंचमेतन्म०
दत्तंचमेअदत्तंचमे०॥ अधीतंचमेअनधीतंचमे०॥ क्लृप्तंचमेअक्लृप्तंचमे० सत्यंचमेअसत्यंचमे०॥ श्रुतंचमेअश्रुतंचमे० व्रतंचमेअव्रतंचमे० यदग्ने
सेंद्रस्यसप्रजापतिकस्यसऋषिकस्यसऋषिराजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्यस्यसमनुष्यराजन्यस्यसाकाशस्यसातीका-
शस्यसानूकाशस्यसप्रतीकाशस्यसदेवमनुष्यस्यसगंधर्वाप्सरस्कस्यसहारण्यैश्चपशुभिर्ग्राम्यैश्चयन्मआत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिद
महमग्नेसर्वव्रतोभवामिस्वाहेति॥ अग्नयइदं०॥ अथोपविश्यान्याःप्रादेशसंमितादशसमिधोममाग्नेवर्चोविहवेष्वित्यनेनसूक्तेनप्रत्यृचंत्र्यृगं
तेग्नावादध्यात्॥ पश्चात्स्वाहाकारमुच्चारयेत्॥ अस्यसूक्तस्यविहव्यऋषिः विश्वेदेवादेवताआद्याजगत्यन्यास्त्रिष्टुभः॥ समिदाधानेवि०॥
ॐममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम॥ मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेमस्वा०॥ विश्वेभ्योदेवेभ्यइ०॥ एवमग्र
ग्रेपि॥ ॐममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः॥ ममांतरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन्स्वा०२ ॐमयिदेवाद्रविणं

मायजंतंमामय्याशीरस्तुमयिदेवहूतिः॥ देव्याहोतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वाःसुवीराःस्वा॰३ ॐ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसो मेअस्तु॥ एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचनानःस्वा॰४ ॐ देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वं॥ माहास्महिप्रज- यामातनूभिर्मारधामद्विषतेसोमराजन्स्वा॰५ ॐ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वं॥ प्रत्यंचोयंतुनिगुतःपुनस्ते३मैषांचित्तं प्रबुधांविनेशत्स्वाहा॥६ ॐ धाताधातृणांभुवनस्ययस्पतिर्देवंत्रातारमभिमातिषाहं॥ इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात् स्वा॰७ ॐ उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः॥ सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाःस्वा॰॥८ ॐ येनःसप त्नाअपतेभवंत्विंद्राग्निभ्यामवबाधामहेतान्॥ वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन्स्वाहा॥९॥ ॐ अर्वांचमिंद्रममुतोहवाम- हेयोगोजिद्धनजिदश्वजिद्यः॥ इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वास्वा॰॥१० इतिदशमंत्राः॥ ततःस्विष्टकृदादिहोमशेषंसमाप- येत्॥ ततःस्नातकोनैमित्तिकंविनानक्तंनग्रश्चनस्नामिनग्नांस्त्रियंनेक्षेवर्षतिनधावामिवृक्षंनारोहामिकूपंनावरोहामिनबाहुभ्यांनदींतरेप्राणसं- शयनाभ्यापद्येइत्येवंसंकल्पयेत्॥ ततःकौपीनंमेखलांचविसृजेत्॥ केशश्मश्रुनखलोमान्यपराजितायांदिशिनिखनति॥ ततोयत्रमधुपर्कादिपू- जास्यसंभावितातत्रैतांरात्रींवसेत्॥ समावर्तनानंतरंत्रिरात्रमाशौचंकुर्यात्॥ ॥इतिश्रीरा॰सु॰नारा॰प्रयोगर॰समावर्तनप्रयोगः॥ ॥अथ क्रमप्राप्तोविवाहः॥ तत्रतावत्तदुपयोगितयाकिंचित्संक्षेपेणोच्यते॥ अनाश्रमीनतिष्ठेतदिनमेकमपिद्विजः॥ आश्रमेणविनातिष्ठन्प्रायश्चित्तीय

ते हिंसन्निति दक्षस्मृतेः॥ गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया॥ वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥ अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्॥ अ
नन्यपूर्विकां कान्तामसपिंडां यवीयसीं॥ अरोगिणीं भ्रातृमती मसमानार्षगोत्रजा॥मिति च याज्ञवल्क्योक्तेस्त्रिविधोपि वेदव्रतोभयस्नातकोऽविलंबे
न लक्षण्यादिविशिष्टां स्त्रियं नपुंसकव्यावृत्तये स्त्रीत्वेन परीक्षितामुद्वहेत्॥ तत्रापि कुलमग्रे परीक्षेतेति गृह्यवचनाद्दोसदाचारादिगुणवत्तया हीन
क्रियात्वादिदोषहीनतया च परीक्ष्य कुलं तज्जोद्वाह्या॥ तदनु लक्षणान्यपि परीक्ष्य लक्षणानि च शुभाशुभसूचकानि तनुलोमकेशदशनत्वादीनि प्र
त्यक्षगम्यानि बाह्यान्यांतराणि चाष्टौ पिंडान्कृत्वेत्यादिना गृह्योक्तानि विविधान्यपि महाग्रंथेभ्यो ज्ञेयानि विस्तरभियात्विह नोच्यंते दानेनोपभोगेन वा
पुरुषांतरपूर्विका न भवति सानन्यपूर्विका तामनेन वाक्दत्तामनोदत्तामग्निपरिगतां सप्तमपदं नीतां भुक्तां गृहीतगर्भां प्रसूतां चेति सप्त पुनर्भुवो व्यावर्ज्यांते
कांतां वोढुमनोनयनयोराल्हादकरीं समान एकः पिंडः पिंडदानक्रियामूलपुरुषशरीरं वा यस्या न विद्यते सा असपिंडा तां कथंचिदेकपिंडक्रियानुप्रवेशेन
निर्वाप्य सापिंड्यं केचिदाहुः॥ एकशरीरावयवान्वयेनावयवसापिंड्यं विज्ञानेश्वरादयो निर्दोषं मेनिरे॥ अत्र बहुतरं वक्तव्यं विचाररत्नतापस्याप्रयोग
रत्नताभंग भीत्या नोच्यते॥ नन्वेवंविधानृशरीरावयवान्वयेन सापिंड्यातिप्रसंगेन न काप्यसपिंडेत्यत आह॥ याज्ञवल्क्यः॥ पंचमात्सप्तमादूर्ध्वं मा
तृतः पितृतस्तथेति मातृपक्षे पंचमात्पितृपक्षे सप्तमादूर्ध्वं सापिंड्यं निवर्तत इति [illegible]शेषः॥ कूटस्थमारभ्यात्र गणना॥ तदुक्तं॥ वध्वा वरस्य वा तातः कू
टस्थाद्यदि सप्तमः॥ पंचमी चेत्तयोर्माता तत्सापिंड्यं निवर्तत इति॥ कूटस्थो मूलपुरुषः॥ यतः संतानभेदः॥ एवं च मातृपितृद्वारक सापिंड्यवतीनां कन्य

प्र॰र
६४

कानामियंसंख्यासंकलना॥उद्वोढौपितरौपितुश्चपितरौतज्जन्मकृद्दंपतीद्वंद्वंतस्यचतुष्कमष्टकमतोप्यस्यक्रमात्षोडशं॥वंशारंभकदंपतीप्रभि
तिरिस्थाससप्तकक्ष्यंरदाएकैकान्वयकन्यकाःपितृकुलेत्वाससप्तकक्ष्यंब्रुवे॥१॥यद्यप्येकस्यबह्व्योपिस्त्रतास्यस्तदपीहतु॥संबंधसाम्यादेकैकेव
गणिनेत्यवधार्यताम्॥२॥एकस्मान्मिथुनात्सुतोथदुहिताद्वंद्वद्वयंतद्वयात्तस्माद्द्वंद्वचतुष्कमष्टचततोनःषोडशात्तोरदाः॥यावत्सप्तसप्तकक्ष्य
सन्निकृतवःकन्याइहैकान्वयेतादृत्तेर्गुणितारसैकरखद्दशौवंशेसपिंडाःपितुः॥३॥मातुर्जन्मददंपतीचमिथुनद्वंद्वंतयोःसागरास्तस्यापंचमक
क्ष्यमश्वमतिरिच्येकान्वयेपुंसुते॥द्वंद्वाद्वंद्वयुगंततोष्टयइतोष्टापंचकक्ष्यंशराःक्षोण्यःसप्तगुणाःशराश्चविधवोमातुःसपिंडाःकुले४॥कुल
द्वयस्यकन्यकाःसुतामिथःसपिंडकाः॥हिमांशुदृग्धरादृशो २१२१ विवाहकर्मवर्जिताइति ५ यवीयसींस्वापेक्षयावयसावपुषाचन्यूनां
अरोगिणींअचिकित्स्यराजयक्ष्मादिरोगरहितांभ्रातृमतीमितिपुत्रिकाकरणशंकानिवृत्यर्थं॥यत्रतुपुत्रिकाकरणाभावनिश्चयस्तामभ्रा
तृकामप्युद्वहेत्॥असमानार्षगोत्रजांऋषेरिदमार्षंगोत्रप्रवर्तकस्यमुनेर्व्यावर्तकःप्रवरइत्यर्थः॥गोत्रंवंशपरंपराप्रसिद्धं॥स्वसमानेआर्ष
गोत्रेयस्यतज्जानभवतितां॥यास्कवाधूलमौनमौकानांभिन्नगोत्राणामपिभार्गववैतहव्यसावेतसेइतिप्रवरैक्यमस्तितत्रविवाहोमाभू
दित्यसमानार्षगोत्रजामित्युक्तं॥आंगिरसांबरीषयौवनाश्वेतिमांधात्रंबरीषयौवनाश्वेति॥आंगिरसमांधातृप्रवरभेदेपियौवनाश्वेगोत्रै
क्यंतादृशेविवाहवारणायासमानगोत्रजामित्युक्तं॥तथाचगोत्रप्रवरौपृथक्पर्युदासेनिमित्तभूतौ॥प्रवरैक्येविशेषमाहबौधायनः॥पं-

विवा॰
६५

चानांत्रिषुसासामान्यादविवाहस्त्रिषुद्वयोः ॥ भृग्वंगिरोगणेष्वेवंशेषेष्वेकोपिवारयेदिति ॥ गोत्रप्रवरनिर्णयः सपिंडसप्रवरसगोत्रविवाहप्रायश्चित्तादि
चमहाग्रंथतोवसेयं विस्तरभियेहनोच्यते ॥ सपत्नमातामहकुलेष्वपिनिर्देशिकात्सापिंड्याद्विवाहः ॥ तथाचसुमंतुः ॥ पितृपत्न्यः सर्वामातरस्तद्भ्रात
रोमातुलास्तद्भगिन्योमातृष्वसारस्तद्दुहितरश्चभगिन्यस्तदपत्यानिभागिनेयान्यन्यथासंकरणकारिणः स्युरिति ॥ अत्रयावद्वचनंवाचनिकमिति
न्यायेनपरिगणितेष्वेवानिर्देशिकंसा पिंड्यंनतुपंचमसप्तपर्यंतं ॥ कश्चित्तुवचनादेवविवाहनिषेधः ॥ तथागृह्यपरिशिष्टे ॥ अथविवाहइत्युपक्र-
म्यमध्येअविरुद्धसंबंधामुपयच्छेतेत्युक्त्वोक्तंदंपत्योर्मिथः पितृमातृसाम्येविरुद्धसंबंधोयथाभार्यास्वसृदुहितापितृव्यपत्नीस्वसाचेति ॥ स्वयमेव
विरुद्धसंबंधेनिवृत्ते ॥ तथानारदः ॥ प्रत्यङ्द्वाहोनैवकार्योनैकस्मैदुहितृद्वयं ॥ नचैकजातयोः पुंसोरेकजन्येचकन्यके ॥ नैवंकदापिदुद्वाहोनैकदासुं
डनद्वयं ॥ अन्यत्रापि ॥ एकजन्मेतुकन्येद्वेपुत्रयोर्नैकजन्मनोः ॥ नपुत्रीद्वयमेकस्मैप्रदद्यात्तुकदाचनेति ॥ अथवरगुणाः ॥ तत्रबुद्धिमतेकन्यांप्र
यच्छेदितिगृह्यं ॥ यमः ॥ कुलंचशीलंचवयश्चरूपंविद्याचवित्तंचसनाथतांच ॥ एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैः शेषमचिंतनीयं ॥ अन्यो
पिगुणदोषविचारोग्रंथांतरादवसेयः ॥ अन्यच्च ॥ कुलेऋतुत्रयादर्वाक्मंडनान्नतुमुंडनं ॥ पुत्रोद्वाहात्नैवपुत्रीविवाहोपिऋतुत्रये ॥ अब्दांत
रान्मुंडनंचनैकदामुंडनद्वयं ॥ अब्दभेदेतुनदोषइतिसंहितासारावल्याम् ॥ फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने ॥ भेदादब्दस्यकुर्वीतनर्तुत्र
यविलंबनमिति ॥ ॥ देयकन्याकालोमहाग्रंथतोज्ञेयः ॥ वधूवरयोः बृहस्पत्यादिशुद्धिर्विवाहेकालशुद्धिर्वर्णवश्यादिघटनानेषुसाधक-

बाधकत्वव्यवस्थाच्च ज्योतिषग्रंथेभ्यो विवेचनीयेति दिक् ॥ तथा ॥ ज्येष्ठमासे ज्येष्ठगर्भस्य जन्मभाद्रौ च सर्वेषां मंगलकार्यं निषिद्धं रत्नकोशे ॥
जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ॥ ज्येष्ठमासाद्युगर्भस्य शुभं वर्ज्यं स्त्रिया अपीति ॥ ॥ अथ कन्यादातारः ॥ ॥ तत्र याज्ञवल्क्यः
पिता पितामहो भ्राता सकुल्यो जननी तथा ॥ कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥ गम्यं त्वभावे दा
तॄणां कन्या कुर्यात्स्वयंवरं ॥ स्वकुल्य प्रत्यासत्तिक्रमेणाद्यौ पितृकुलस्थस्तदभावे मातामहकुलस्थः सर्वाभावे जननी ॥ प्रकृतिस्थ उन्मादादिदो
षहीनः गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तं ॥ नारदोपि ॥ पिता दद्यात्स्वयं कन्यां भ्राता चानुमते पितुः ॥ मातामहो मातुलश्च सकुल्यो बांधवस्तथा
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते ॥ तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥ यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेदिति ॥ ॥
अथ विवाहभेदाः ॥ ॥ मनुः ॥ ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः ॥ गांधर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः ॥ एतेषां लक्षणं फलं चा
लंकृत्य कन्यामित्यादि गृह्यरत्ने द्रष्टव्यं ॥ एतेषां व्यवस्था स्मृतौ ॥ चत्वारो ब्राह्मणस्याद्या राज्ञो गांधर्वराक्षसौ ॥ राक्षसश्चासुरो वैश्ये शूद्रे चां
त्यस्तु गर्हितः ॥ अंत्यः पैशाचः ॥ गांधर्वादिष्वपि भार्यापतिभावाय पश्चाद्धोमादि सप्तपद्यंतं कार्यं ॥ गांधर्वासुर पैशाचा विवाहा राक्षसश्च यः
पूर्वं परिग्रहस्तेषु पश्चाद्धोमो विधीयत परिशिष्टात् ॥ होमाद्यभावे वरांतराय देयासनितु नेति ॥ बौधायन आह ॥ बलादपहृता कन्या मंत्रैर्यदि न
संस्कृता ॥ अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति ॥ बलादिति छलादेरप्युपलक्षणं ॥ इत्यादि सर्वं विचार्य परिवित्ति परिवेत्तृत्वादि दिधिषूश्चे

दिधिषुत्वादिच यथा न स्यात्तथा विवाहः कार्यः ॥ अस्माभिस्तु विस्तरभीतेर्नेर्न लिख्यते ॥ अथ मुख्यत्वाद्विवाहांगभूतवाग्दानविधिर्गृह्यपरिशिष्टा
द्वारसमस्योच्यते ॥ ज्योतिर्विदादिष्टे विवाहनक्षत्रादियुते शुभकाले द्वौ चत्वारोऽष्टादशौ वा प्रशस्तवेषाः वरेण तत्पित्रादिना वा ॥ अनृक्षरा ऋजवः संतु
पंथा इति मंहिनास्त्रावृतीभिः पुरंध्रीभिर्मंगलगीततूर्यैश्च सह शकुनदर्शनपूर्वकमलंकृतवरसुतास्तद्युता वा कन्यागृहमेत्य शुभैर्वस्त्रपी
ठासने प्राङ्मुखीं सालंकारां सुवेषां कन्यामुपवेश्य तद्धस्ते फलतांबूलादि दत्वा तत्पित्रादिपुरतः श्रीगणपत्यादिस्मरणपूर्वकं प्राङ्मुखासीनाः
प्रत्यङ्मुखा वा अमुकप्रवरान्वितामुकगोत्रोत्पन्नाया अमुकप्रपौत्राया अमुकपौत्राया अमुकपुत्राया अमुकनाम्न्ये वराय अमुकप्रवरोपेतामुकगोत्रोत्पन्ना-
ममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नीं कन्यां भार्यात्वाय वृणीमहे इति ब्रूयुः ॥ अथ दाता भार्याज्ञातिबंधूनामनुमतिं कृत्वा यथोक्तमन्त्र
धानन्नूघवावृणीध्वं इति वदेत् ॥ एवं द्विः पुनः प्रयुज्य प्रदास्यामीति चोच्चैस्त्रिर्वदेत् ॥ ततो वरपित्रादिर्गंधाक्षतशुभवस्त्रयुग्मभूषणतांबूलपु-
ष्पादिभिः कन्यां पूजयेत् ॥ संप्रदायागतमंत्रैः ततः कन्यादाता प्राङ्मुखः कन्या वामत उपविश्य आचम्य देशकालौ स्मृत्वा करिष्यमाणविवा-
हांगभूतं वाग्दानमहं करिष्ये ॥ तदंगं गणपतिपूजनं करिष्य इति संकल्प्य गंधादिदक्षिणांतैरुपचारैर्गणपतिं पूजयित्वा यथाचारं कलशपूजना
दि कृत्वा स्वस्थाने कन्यापूजयितारमुपवेश्य स्वयं तत्प्राच्यां प्रत्यङ्मुख उपविश्य गंधतांबूलदानादिना पूजयेत्स च दातारं ॥ ततो दाता आचार-
तो हरिद्राखंडपंच[illegible] दृढपूगफलानि च गंधाक्षतालंकृतानि गृहीत्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामु

स

कनाम्नेवरायामुकप्रवरान्वितामसुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्य ममपुत्रीममुकनाम्नीमिमांकन्यांज्योतिर्विदादिष्टेमुहूर्ते
तेदास्येइतिवाचासंप्रददेइतिचोक्त्वा ॥ अव्यंगेपतितेक्लीबेदशदोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसन्निधौवितिवरपित्रादिर्वस्त्रमा
नेतानिपूगफलानिप्रक्षिप्यप्रतिष्ठामंत्रेणतदस्त्वित्यादिनावस्त्रेबध्वाग्रंथिंचंदनेनचार्चयेदित्याचारप्राप्तं ॥ ततोहरिद्राखंडंपंचपूगफलानितथै
ववरपित्रादिर्गृहीत्वामुकगोत्रायामुकप्रवरविषयेभवतोनिश्चिताभवंत्विितिदातृवस्त्रप्रांतेप्रक्षेपादिकुर्यात् ॥ ततोदाता ॥ वाचादत्तामयाकन्या
पुत्रार्थेस्वीकृतात्वया ॥ कन्यावलोकनविधौनिश्चितस्त्वंसुखीभवेतिवरपितरंप्रतिपठेत् ॥ वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृतामया ॥ वराव॰
भवेतिदातारंप्रतिपठेत् ॥ भ्रात्रादौस्वीकर्तरिभ्रात्रार्थेइत्याद्यूहःकार्यः ॥ ततोब्राह्मणाः ॥ शिवा॰तु ॥ सौम॰स्तु ॥ अक्ष॰स्तु ॥ दीर्घ॰स्तु ॥ एतद्वः स॰स्त्वित्यु
क्त्वा ॥ समानीवआकूतिःमसुग्मंत्रेतिमंत्रौपठेयुः ॥ ततोदातापात्रस्थसिततंडुलपुंजेशचीमावाह्यषोडशोपचारैःपूजयित्वाचकन्यैवंप्रार्थयेत् ॥
देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमेइति ॥ ततःपुरंध्रीभिर्नीराजनादिमांगलिकंकार्यम् ॥ विप्राश्च
गंधतांबूलादिपूजिताआशीर्मंत्रान्पठेयुः ॥ तेच ॐ हिरण्यवती॰१ समिन्द्रस्यश्रयमाणः॰२ वनस्पतेशत॰३ इंदुर्देवाना॰४ अस्यपिबक्षमतः॰५
घृतादुलुसं॰६ इतिसौभाग्यपदांताःषट् ॥ तदस्तुमित्रावरुणा॰ गृहाणीवेमतिषेत्यादयश्च ॥ ॥ इतिनारायणभट्टविरचितेप्रयोगरत्नेवाग्दान
प्रयो॰ ॥ ॥ ततोवैवाहिकेशुभेमुहूर्तेवधूवरयोस्तैलहरिद्रारोपणादियथाचारंकार्यं ॥ वाग्दानोत्तरंदेशांतरगतेवरेनारदः ॥ प्रतिगृह्यतुयःक

न्यांवरोदेशांतरंव्रजेत् ॥ त्रीनृतून्समतिक्रम्य कन्यान्यंवरयेद्वरं ॥ वरमरणेतुवसिष्ठः ॥ अद्भिर्वाचादत्तायांम्रियेतादौवरोयदि ॥ नचमंत्रोपनी-
तीस्यात्तांकुमारीपितुरेवसा ॥ यस्मैवाग्दत्तातस्यदोषप्रयोगेप्रशस्तवरांतरलाभेचतस्मैनदेयेत्याह याज्ञवल्क्यः ॥ दत्तामपिहरेत्पूर्वाच्छ्रेयांश्चे
द्वरआव्रजेदिति ॥ अत्रचपूर्वस्यदोषयोगइतिविज्ञानेश्वरः ॥ प्रतिश्रुत्याप्यधर्मेणसंयुक्तायनदद्यादितिचस्मृतिः ॥ अन्यथाहरणेतुसएवदंड-
माह ॥ सत्कृत्यप्रदीयनेकन्याहरंस्तांश्चोरदंडभागिति ॥ ॥ अथविवाहेमंडपप्रकारमाहवसिष्ठः ॥ ॥ षोडशारत्निकंकुर्याच्चतुर्द्वारोपशो-
भितं ॥ मंडपंतोरणैर्युक्तंतत्रवेदिंप्रकल्पयेत् ॥ अष्टहस्तंतुरचयेन्मंडपंवाद्विषट्करं ॥ वेदिकानिर्माणप्रकारमाहनारदः ॥ हस्तोच्छ्रितांचतुर्हस्तैश्च
तुरस्त्रांसमंततः ॥ स्तंभैश्चतुर्भिःसुश्लक्ष्णांवामभागेतुसद्मनि ॥ समांतथाचतुर्दिक्षुसोपानैरुपशोभितां ॥ प्रागुदक्प्रवणांरंभास्तंभहंसशु-
कादिभिः ॥ विचित्रांसंकितांकुंभैर्विहितैस्तोरणांकुरैः ॥ भृंगारपुष्पनिकरैर्वर्णकैःसमलंकृतां ॥ विप्राशीर्वचनैःपुण्यैःस्त्रीभिर्दीपैर्मनोरमां
वादित्रनृत्यगीताद्यैर्हृद्यानंदिनीं शुभां ॥ एवंविधामारुरुक्षेन्मिथुनंसाग्निवेदिकामिति ॥ हस्तोत्रवध्वाः ॥ सोपानकरणंपश्चिमभागेउपरिचतुर्दिक्षु
वा अधोयथाचारं ॥ सोपानातिरेकेणचतुर्हस्ताचतुरस्त्रा ॥ इतिविवाहवेदी ॥ ॥ अथविवाहपूर्वदिनकर्तव्यं ॥ ॥ वधूपितावरपिताचविवाहदिनात्पूर्वेद्युःपूर्वा
ण्हेसपत्नीकःकृताभ्यंगोधृतमांगलिकवेषःकृततलेपनरंगमांगलिकेप्रांगणेशुभासनेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींतद्दक्षिणतःकन्यांवरंवोपवि
श्याचम्यप्राणानायम्येष्टदेवतागुर्वादिनमस्कारंकृत्वादेशकालौसंकीर्त्यअस्यामुकशर्मणःपुत्रस्यश्वःकरिष्यमाणविवाहांगभूतंस्वस्तिवाचनमंकुरार्पणंनां

स्यकर्षंनिर्वापद्गुद्वास्य अंगारानग्नावतिसृज्यसवितुस्त्वेतिमंत्रेणसकृद्द्विस्तूष्णीमेवंत्रिरुत्पूयपवित्रेप्रोक्ष्याग्नौप्रहृत्याज्यंपश्चिमतोदर्भेष्वासाद्यस्रुक्स्रु
वयोःसंमार्जनंकृत्वाज्यंस्रुवेणास्रुचिचतुर्गृहीत्वा ॐ मनोज्योतिर्जुषतामाज्यंविछिन्नंयज्ञंसमिमंदधातु ॥ याइष्टाउषसोयाअनिष्टास्ताःसंतनोमिह
विषाघृतेनस्वाहा ॥ ज्योतिषइदंनममेतिहुत्वानित्यहोमार्थंपूर्ववत्तंडुलान्संस्कृत्यनित्यहोमवत्परिसमूहनादिसमित्प्रक्षेपणांतंतत्रपूर्वकंअतीतका
लादारभ्यक्रमेणद्वेद्वे आहुतीहुत्वानंतरकालहोमंचकृत्वाअग्निंसूर्यंप्रजापतिंचोपस्थायपरिसमूहनाद्यंगजातंसकृत्कुर्यात् ॥ इत्याशौचेहोमविधिः ॥ ॥
अथापत्कालेकर्तव्योहोमद्वयसमासप्रयोगः ॥ ॥ पूर्ववत्सायंकालीनाहुतिद्वयंहुत्वापर्युक्षणादिकृत्वाक्वचित्कालंनिमील्यमानिमील्यवापुनःपर्यु-
क्षणादिसमित्प्रक्षेपणांतंकृत्वाग्रेःकर्तव्यप्रातराहुतिद्वयमवकृष्यहुत्वोपस्थानंकुर्यात् ॥ एकेवर्चसासंमील्यवापुनःपर्युक्षणादिसमिधासायंहोमा-
द्वावेवउपस्थानेमंत्राः ॥ हविष्पांतमितिपंचर्चस्यसूक्तस्यमूर्धन्वामदेव्यःसूर्योवैश्वानरोत्रिष्टुप् ॥ उपस्थानेवि० ॥ ॐ हविष्पांतमजरंस्वर्विदिदिवि-
स्पृश्याहुतंजुष्टमग्नौ ॥ तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत ॥ गीर्णंभुवनंतमसापगूळ्हमाविःस्वरभवज्जातेअग्नौ ॥ देवेभिर्न्विषितोयज्ञि०
योहोतासीत्प्रथमोदे० ॥ यज्जातवेदोभुव० ॥ एतैर्मंत्रैःप्राजापत्यमुपस्थायपर्युक्षणाद्यंगजातंसकृत्कुर्यात् ॥ ॥ अथगुर्वापदिपक्षहोमः ॥ तत्रप्र
तिपदिसायंकालेसमित्प्रक्षेपणांतंपूर्वांगजातंकृत्वाहुतिप्रमाणेनतंडुलान्पात्रद्वयेप्रतिपात्रंचतुर्दशवारंगृहीत्वाहोमकालेप्रथमपात्रस्थानग्नयेस्वा
हेतिसर्वान्जुहुयात् ॥ ततःप्राजापत्यार्थंगृहीतान्प्रजापतिशब्दंचतुर्थ्यंतंमनसाध्यायन्स्वाहेतिहुत्वोप स्थानाद्यंगजातंसकृत्कुर्यात् ॥ एवंद्वितीया

यां प्रातः समित्प्रक्षेपणादि पूर्ववत् कृत्वा सूर्यायस्वाहेति पूर्ववद्धुत्वा सायंकालीनोत्तराहुतिवर्ज्जं हुतीयाहुतिं च हुत्वोपस्थानाद्यंगजातं सकृत्कु-
र्यात् ॥ पक्षमध्ये वापन्नावग्नावाग्नि चतुर्दशी सायंकालीन होमांतानां शेषहोमान् सायं समस्येत् ॥ पर्वप्रातर्होमांतांश्च प्रातः शेषहोमान् समस्येत्
सर्वथा पर्वसायंहोमः प्रतिपत्प्रातर्होमश्च पृथगेव होतव्यौ ॥ अत्र पूर्ववदग्निमभिरक्षेत् ॥ अंतरा पत्नि हुत्वौ तु न तदारभ्य पूर्ववत्सायं प्रातर्हो-
मान्यथाकालं कुर्यात् ॥ ॥ अथ सभार्यस्य प्रवासे प्रसक्ते अग्निसमारोपविधिः ॥ ॥ कालहोमानंतरं अयं ते योनिरृत्विय इत्यस्य गाथिनो विश्वा
मित्रोऽग्निरनुष्टुप् ॥ अग्निसमारोपणे वि० ॥ ॐ अयं ते योनिरृत्वियो यतो जातो अरोचथाः ॥ तं जानन्नग्न आसीदाथा नो वर्धया गिरः ॥ इत्यनेनार
णिहृये अग्निं समारोपयेत् ॥ अथवा अनेनैव अश्वत्थसमिधि समारोपयेत् ॥ यद्वा ॥ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि
कृण्वन्नर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः सक्षय एहि इति मंत्रेण पाणी प्रताप्य आत्मनि समारोपये
त् ॥ तत्र प्रादुष्करणकाले अरणी समारोपे अरणी निर्मथ्य ॥ ॐ प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ॥ प्रजां पुष्टिं रयिमस्मासु
धेह्यथाभव यजमानाय शंयोः ॥ इत्यनेन स्थंडिले ग्निं प्रतिष्ठापयेत् ॥ अश्वत्थसमित्समारोपणपक्षे श्रोत्रियागारादग्निमाहृत्य संस्कृते स्थंडिले प्र
तिष्ठाप्य प्रत्यवरोहेति मंत्रेण तां समिधं निदध्यात् ॥ आत्मसमारोपपक्षे सर्वदाऽस्पृश्यस्पर्शनं जले निमज्य स्नानं स्त्रीगमनं चाकुर्वन्मूत्रपुरीषो-
त्सर्गे शौचमकृत्वा चिरकालमतिष्ठंश्च होमकाले आत्मसमारूढमग्निं मुष्टिसरूपेण प्रत्यवरोहेति मंत्रेण लौकिकाग्नौ निदध्यात् ॥ एवं यथाधि

प्र·र·
८५

कारमग्निं प्रनिष्टाप्य कालद्वये एककाले वा पूर्ववज्जुहुयात् ॥ इदं समारोपणं द्वादशरात्रपर्यंतमेव कुर्यात् ॥ अथ पुरुषस्यैव प्रवासकाले कर्तव्यं ॥ प्रवासश्च स्व
मिकेन द्रव्यार्जनादृष्टकार्यार्थमेव केवलेन पुरुषेण वा कार्यः ॥ न तु तीर्थयात्राद्यदृष्टार्थकार्यार्थे ॥ तत्र होमांते पूर्वोक्तमंत्रैरुपस्थाय पुनः प्रवासार्थं अभ
यं वो भयं मे स्त्विति मंत्रेणाग्निमुपस्थाय द्विमाससमध्यवर्तिकालेष्वन्यतमकालपर्यंतं प्रोष्य पुनः स्वगृहसमीपमेत्य ॐ गृहा मा बिभीतोप वः स्वस्त्येवो-
स्मासु च प्रजायध्वं मा त्व वो गोपतीरिषदिति मंत्रेण गृहं निरीक्ष्य ॐ गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् ॥ इरां वहंतो घृतमुक्षमाणास्तेष्व
हं सुमनाः संविशानीति मंत्रेण गृहं प्रविश्य ॐ शिवं शग्मं शंयोः शंयोरिति पुनस्त्रिरनुवीक्ष्य होमकालेउपस्थानांतं कृत्वा ॐ अभयं वो भयं मे स्त्विति पु
नरग्निमुपतिष्ठेत् ॥ ततो ज्येष्ठपुत्रशिरउभाभ्यां पाणिभ्यां परिगृह्य ॐ अंगादंगात्संभवसि हृदयादधिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शत
मिति मंत्रं जपित्वा मूर्धानं त्रिराजिघ्रेत् ॥ एवमितरेषां च पुत्राणां क्रमेण कृत्वा प्रत्तदुहितॄणां तूष्णीमेव शिरो जिघ्रेत् ॥ एतत् पुत्रेपि प्रोष्यागते भवति ॥ अ
वगतमप्यप्रियं प्रवासादागतं मन्यते तद्दृष्टैर्न निवेदयेयुः ॥ अथाग्निसंसर्गदोषे प्रायश्चित्तं ॥ स्वगृह्याग्निरन्यगृह्याग्निना संसृष्टश्चेद्द्वाग्नी विभज्योभौ समि -
त्समारोपणं कुर्यात् ॥ ततः पूर्ववद्धोनासमिधाग्निमवरोप्य देशकालौ संकीर्त्य समिद्द्वयमादाय अस्मिन्नन्वाहितेग्नौ विविच्यादिवचक्षुषी आज्येनेत्यनेन सुक्तावि
विचिमग्निं प्रधानदेवतां चरुद्रव्येण शेषेण स्विष्टकृदादि सद्यो यक्ष्ये इत्यनमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादि पूर्णपात्रनिधानांतं कृत्वा अग्न
ये विविचये त्वा जुष्टं निर्वपामीति चतुरो मुष्टीन्निरूप्य प्रोक्षणाद्याज्यभागांतं कृत्वा अग्नये विविचये स्वाहेति हुत्वा स्विष्टकृदादि होमशेषं समापयेत्

नेये

प्र·का·

८५

अनुपक्रांतदर्शपूर्णमासश्चेत् पूर्ववदाज्यंसंस्कृत्यस्रुवेण द्वादशवारंस्रुचिगृहीत्वा अग्नयेविविचयेस्वाहेतिस्रुचापूर्णाहुतिंहुत्वाकालहोमंचरेत्॥
पश्चान्होतात्तु अग्नयेपथिकृतेजुहुयात्॥शवाग्निनासंस्पृष्टश्चेदग्नयेशुचयेस्वाहेतिजुहुयात्॥पचनाग्निनासंस्पृष्टश्चेदग्नयेसंसर्गायस्वाहेतिजुहु-
यात्॥ वैद्युतेनसंस्पृष्टश्चेदग्नयेऽप्सुमतेजुहुयात्॥ ॥अथनष्टाग्नेःपुनःसंधानप्रयोगः॥ ॥तत्रप्रमादादग्निनाशेयजमानःपत्न्यासहस्नानादि
नाशुचिर्भूत्वादेशकालौसंकीर्त्यममप्रमादादिनाग्नित्यागदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरिष्येइतिसंकल्प्यतत्रत्रिरा-
त्रमग्नित्यागेप्राणायामशतं॥विंशतिरात्रमेकदिनमुपवासः॥मासद्वयेत्रिरात्रोपवासः॥अब्देप्राजापत्यकृच्छ्रं॥एवंत्यागकालानुसारेणप्राय-
श्चित्तंकृत्वा आयतनंगोमयेनोपलिप्योल्लिख्ययथालाभंसिकतादिसंभारान्निदध्यात्॥तेयथासिकताःपद्मपत्रंचवराहविहताचमृत्स्नूदसा
रवृत्करंचोषंवल्मीकवपशर्कराः॥उदुंबराशनिहतंपर्णाश्वत्थविकंकताः॥ शमीकुशश्चविज्ञेयाआधानद्रव्यसंज्ञिताः॥ ततःश्रोत्रियागारा-
दाहृतमग्निंविधिवत्प्रतिष्ठाप्यसमिध्यमाणानायम्यदेशकालौसंकीर्त्यममप्रमादाद्विच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्येइतिसंकल्प्या-
ज्यंपूर्ववत्संस्कृत्यस्रुवंचसंमृज्य ॐ अयाश्चाग्नेतिमंत्रेणस्रुवेणाज्यंहुत्वासायंकालपर्यंतंपत्न्युपवसेत्तदशक्तौयजमानोवा॥सायंकालेतुपू
र्ववन्नित्यहोमंकुर्यात्॥द्वादशाहपर्यंतमयमग्न्युत्पत्तिविधिः॥ तदूर्ध्वंतुवक्ष्यमाणोविवाहहोमविधिः॥आलस्यादिनाबुद्धिपूर्वकमग्नित्या
गेतत्तत्कालानुसारेणेदंप्रायश्चित्तंद्वादशाहपर्यंतंत्रिरात्रमुपवासः॥मासपर्यंतंद्वादशरात्रमुपवासः॥ अब्दपर्यंतंमासंपयोव्रतं॥द्विवर्षप-

र्यंतंचांद्रायणं॥ त्र्यब्दपर्यंतंचांद्रायणंसोमपानंच॥ तदूर्ध्वमब्दकृच्छ्रं॥ धनिनोगोदानंचेतिप्रयोगपारिजाते॥ स्मृत्यर्थसारेतुद्वादशाहातिक्रमे-
त्र्यहमुपवासः॥ मासातिक्रमेद्वादशाहमुपवासः॥ संवत्सरातिक्रमेमासमुपवासः॥ पयोभक्षणंवाइतिविशेषः॥ एवंकालविलंबश्चेत्संकल्पपू
र्वकंप्रायश्चित्तंकृत्वापुनःसंधानं यत्रतुअग्निविच्छेदनिमित्तेन केनचिदग्निविच्छेदःकालविलंबश्चनास्तितत्राकृत्वैवप्रायश्चित्तंपुनःसंधानंका
र्यं॥ ॥अथविच्छिन्नस्यगृह्याग्नेःपुनःसंधानविधिः॥ ॥पत्न्यासहकृतस्नानादि नित्यक्रियोदेशकालौसंकीर्त्यैतावंतंकालंगृह्याग्निविच्छे
दजनितप्रत्यवायपरिहारार्थंएतावत्प्रायश्चित्तममुकप्रत्याम्नायेनकरिष्यइतिसंकल्प्य अग्निविच्छेदकालगणनयास्मृत्युक्तंप्रागुक्तंप्रायश्चि
त्तंदंपतीसहकुर्यातांनपृथक्समासेतस्मिन्नग्निविच्छेदेनलुप्तानांसायंप्रातर्होमानांतथादर्शपूर्णमासस्थालीपाकानांचसंपत्तिपर्याप्त-
मिदंव्रीह्यादिद्रव्यमाज्यंचब्राह्मणायसंप्रददेइतिलुप्तसायंप्रातर्होमस्थालीपाकगणनयावत्पर्याप्तंव्रीह्याद्याज्यंचब्राह्मणायदद्यात्॥ ततः
शुभेकालेकृतशिराचांतःप्राणानायम्यदेशकालौस्मृत्वाविच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्येइतिसंकल्प्यस्थंडिलोल्लेपनोल्लेखनाभ्युक्ष
णाग्निप्रतिष्ठापनानिकृत्वान्वाधानंकुर्यात् तद्यथा द्वेसमिधौगृहीत्वादेवतापरिग्रहार्थमन्वाधानंकरिष्येइतिसंकल्प्यास्मिन्नन्वाहितेग्नौजात-
वेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवते आज्येनात्रप्रधानंत्रिरग्निंपवमानंसकृदग्निंप्रजापतिंचाज्येन अर्यमाग्निंवरुणाग्निंपूषा-
ग्निंप्रजापतिंचलाजद्रव्येणचतुर्वारंस्त्र्यासावित्रींमाज्यद्रव्येणशेषेणस्विष्टकृतमित्यादिपरिसमूहनादिप्राकृतं॥ पात्रासादनेविशेषः॥ प्रो

सूर्यासा

क्षणीं स्रुवं प्रणीतामाज्यपात्रं लाज शूर्पं इध्मं बर्हिश्च दधिप्राशनपक्षे दधि चासादयेत्॥ आज्यसंस्कारादि प्राकृतं तत्राज्येन सह लाजानामपि पर्यग्निक
रणं आज्योत्पवनासादनयोः कृतयोर्लाजानां त्रिः प्रोक्षणं॥ स्रुवसंमार्जनादि पत्न्यान्वारब्धइध्माधानाद्याघारांतं प्राकृतं कुर्यान्न चक्षुषी॥ अत्र प्रधानं॥ अ
ग्न आयूंषीति तिसृणां शतं वैखानसा ऋषयः॥ अग्निः पवमानो देवता गायत्री छंदः॥ अग्निपुनःसंधानप्रधानाज्यहो० ॐ अग्न आयूंषि० स्वा० अग्नये पव० ॐ
अग्निर्ऋषिः० स्वा० अग्नये पवमानायेदं न मम॥ ॐ अग्ने पवस्व० स्वा० अग्नये प० त्वमर्यमा वस्कश्रुतोग्निस्त्रिष्टुप्॥ विनियोगः प्रा० ॐ त्वमर्यमा भ० स्वा० अ-
ग्नये पव० प्रजापते न हिरण्यगर्भः प्रजापतिस्त्रिष्टुप्॥ विनियोगः प्रा० ॐ प्रजापते० स्वा० प्रजापतय इ० ५ अथ पत्न्याः प्रक्षालितेंजलौ पतिराज्येनोपस्तीर्य
द्विर्लाजानोप्य पंचावत्ती तु त्रिरोप्य शूर्पस्थानभिघार्य अंजलिस्थानप्यभिघार्य तिष्ठन्तिष्ठंत्या अजलिं स्वकराभ्यां धृत्वा अर्यमणं वरुणं पूषणमिति तिसृ
णां वामदेवोर्यमाग्निर्वरुणाग्निः पूषाग्निरनुष्टुप्॥ गृह्याग्निपुनःसंधानलाजहोमे वि० ॐ अर्यमणं नु० स्वाहेति पठितमंत्रांते अंजलिमविछिंदंती॥ अंगुल्यग्रे
संश्लिवा सपार्श्वेन वा पत्नी जुहुयात्॥ एवमग्नेपि अर्यमाग्नय इ० ॐ वरुणं नु दे० वरुणाग्न० ॐ पूषणं नु०॥ पूषाग्न० ततः शूर्पकोणेन शिष्टान्सर्वान्लाजान्प
तिः पत्नी वाप्यात्मं प्रजापतिं ध्यायन् जुहुयात् प्रजापतय इ० लाजानां स्विष्टकृन्नास्ति ततः उपविश्याज्यं पतिर्जुहुयात्॥ आ नः प्रजामिति चतसृ
णां सूर्या सावित्री सूर्या सावित्री आद्या जगती द्वितीया त्रिष्टुबंत्ये द्वे अनुष्टुभौ पुनःसंधानाज्यहोमे वि० ॐ आ नः प्रजां० स्वा० सूर्यासावित्र्या इ० ए
वमग्रेपि त्यागः० ॐ अघोर० स्वा० ॐ इमां त्व० स्वा० ॐ सम्राज्ञी० स्वा० समंजंत्वित्यस्य सूर्यासावित्री सूर्यासावित्र्यनुष्टुप् दधिप्राशने वि० आज्यशेषेण तद्दध्याज

नेत्राणि॰ ॐ समंजंतु वि॰ एतेनेन स्वयं दधि प्राश्नीयात् ॥ आज्यशेषेण हृदयांजनं वा कुर्यात् ॥ पत्न्यै च दधि प्रयच्छेत् ॥ सा च तूष्णीं प्राश्नीयात् ॥ स्वहृ
दयांजनपक्षे पत्न्या अपि तूष्णीं हृदयांजनं ॥ अथाज्येन ॥ यदस्य कर्मण इति स्विष्टकृतं हुत्वा इध्मसन्नहनादि कर्मशेषं समापयेत् ॥ अत्र कारिका
उपलेपादिकं कुर्यादाघारांतं विवाहवत् ॥ विवाहाज्याहुती हुत्वा लाजहोमो भवेदिह ॥ गृहप्रवेशनीयाश्च हुत्वा स्याद्धृदयांजनं ॥ परिणीयाद्दिनास्त्व
त्र लाजानावपति स्वयं ॥ ॥ इति प्रयोगरत्ने गृह्याग्निपुनःसंधानम्॰ ॥ ॥ अथ नास्तिक्याद्विसृष्टाग्नेरग्निपुनःसंधानं ॥ ॥ तत्र कर्ता संकल्पपूर्वकं
स्त्रिया सहोपोष्यापरेद्युः कृतनित्यक्रियः संकल्पपूर्वकं प्रायश्चित्तं कुर्यात् ॥ तद्यथा ॥ द्वादशाहपर्यंतं यथाशक्ति सुवर्णदानं ॥ मासद्वयपर्यंतं कृच्छ्रं
मासचतुष्टयपर्यंतमतिकृच्छ्रं ॥ षण्मासपर्यंतं पराकः ॥ ततोब्दपर्यंतं मासं पयोव्रतं ॥ अब्दे पूर्णे त्रैमासिकव्रतं ॥ ततः प्रतिवर्षं त्रैमासिकावृत्तिरिति ॥
ततः कालगणनया सायंप्रातर्होमदर्शपूर्णमासस्थालीपाकहोमद्रव्यदानं ॥ ततः शुभदिनेऽपराण्हे सभार्यो देशकालौ संकीर्त्य नास्तिक्याद्विसृष्टाग्नेः
पुनःसंधानं करिष्य इति सं॰ ॥ आयतनोपलेपनादि यथामीलितसंभारनिधानांतं कुर्यात् ॥ संभाराश्च ॥ पलाशोदुंबराश्वत्थशमीवैकंकतांबुजं ॥ व
ल्मीकोरखरवाराहमूषकोत्खातमृत्तिकाः ॥ शर्कराः सिकताः सूदाः शंपाध्वस्तं तत्कुलत्वचः ॥ यथालाभं समाकीर्य पावनाग्निं समुद्धरेदिति ॥ तत इदं
त एकं पर ऊत एकं तृतीयेन ज्योतिषा संविशस्व ॥ संवेशनेनत्वा॰ श्वाकुरेधिप्रियोदेवानां परमेजनित्रे इति मंत्रेण ॐ भूर्भुवः स्वरित्यग्निं प्रतिष्ठा-
प्य समिद्द्वयमादाय पुनर्देशकालौ संकीर्त्य नास्तिक्याद्विसृष्टाग्नेः पुनःसंधानांगभूतमन्वाधानं करिष्येऽस्मिन्नन्वाहितेऽग्नावित्यादि आघारावाज्य

भागौच आज्येनेत्यंतमुक्त्वात्रप्रधानं अग्निमष्टवारं अग्निं पवमानमग्निं पावकमग्निं शुचिमग्निं पथिकृतमग्निं तंतुमतं चाज्येन शेषेणाग्निं स्विष्टकृतमित्यादिस
घो यक्ष्य इत्यंतमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनाद्याज्यभागांतं कृत्वा स्रुवेण स्रुच्यामाज्यं चतुर्गृहीत्वा त्वमग्ने सप्रथा असीत्यस्यात्रेयसुतंभ
रोग्निर्गायत्री ॥ नास्तिक्यादिदुष्टस्याग्नेः पुनःसंधानप्रधानाज्यहो० ॥ ॐ त्वमग्ने सप्रथा० स्वा० अग्नय इ० १ यो अग्निमित्यस्य काण्वो मेधातिथिरग्निर्गा
यत्री ॥ विनि० प्रा० यो अग्निं दे० स्वा० तंतुं तन्वन्नित्यस्य वामदेवोग्निर्जगती ॥ वि० प्राग्व० तंतुं तन्वं० त्वं नो अग्न इत्यस्याङ्गिरसो हिरण्यस्तूपोग्निर्जगती
विनि० ॐ त्वन्नो अग्ने तव दे० स्वा० ४ त्वन्नो अग्ने वरुणस्येत्यस्य गौतमो वामदेवोग्निवरुणौ त्रिष्टुप् ॥ विनि० ॥ त्वन्नो अग्ने वरु० स्वा० ५ स त्वन्नो अग्न
इत्यस्य गौतमो वामदेवोग्निवरुणौ त्रिष्टुप् ॥ स त्वन्नो अग्नेवमो भवोती० स्वा० ६ ॐ मनोज्योतिर्जु० ७ पुनरस्त्वादित्या रुद्रा वसवः समिंधतां पुनर्ब्र-
ह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तन्वो वर्धयस्व सत्याः संतु यजमानस्य कामाः स्वा० ८ ॥ एतैर्मंत्रैः स्रुचामष्टाहुतिं चतुर्गृहीतेनाज्येनाष्टावाहुती-
र्हुत्वा स्रुवेण स्थाल्या आज्यमादाय ॐ अग्नये पव० पवमानाय स्वा० ॐ अग्नये पावकाय स्वा० ॐ अग्नये शुचये स्वा० ॐ अग्नये पथिकृते स्वा० ॐ
अग्नये तंतुमते स्वा० एवं पंचाज्याहुतीर्हुत्वा देवताभ्यस्त्यक्त्वा स्विष्टकृदादिहोमशेषं समाप्याहिताग्नयेऽनडुहं दक्षिणां दद्यादिति ॥ अथापत्नी-
कोपासनप्रयोगः ॥ स्वतः पूर्वमृतायै पत्न्यै दाहायाग्निं दत्वा शिष्टाग्नौ पूर्ववत्सायंप्रातर्होमौ कुर्यात् ॥ इष्टिस्तु कार्या वा न वा ॥ अथ विवाहो
त्तरं दंपत्योर्गृहप्रवेशः ॥ गृहप्रवेशनीयहोमं दिनादारभ्य दर्शसंक्रांतिव्यतीपातविष्ट्यादिदोषरहिते चतुर्थ्यादौ मौहूर्तिकोक्ते शुभे दिने गृहप्रवेशं

दूयासा वि॰
नदी

करिष्यमाणःश्वशुरगृहेभ्यज्यस्नात्वारात्रौस्वदेशाचारानुसारेणनागवल्यादिकृत्वाश्वशुरदत्तदासीदासपर्यंकादियुतःसुवासिनीकृतनीराजनः
श्वशुरादिभ्योगृहीतब्राह्मणाशीर्वचनःस्वलंकृतःस्वलंकृतयावध्वासहविवाहाग्निंशकटेवस्थाप्याजस्रंनयन्॥पूषात्वेतइत्यस्यसूर्यासावित्रीत्रि
ष्टुप्॥वध्वायानमारोहणेवि० अनेनयथाविभवंगजाश्वादियानमारोहयेत्॥यानप्रयाणेएवासौनियमः॥यानादन्येनशिबिकादिनाप्रयाणेन
मंत्रः॥स्वग्रामविवाहपक्षेस्वगृहगमनेनायंमंत्रः॥गमनेयद्यंतरानाव्यौदिस्यात्तदाश्मन्वतीरीयतइतिऋचार्धेनवधूंनावमारोहयेत्॥अत्राजहाम
येस्फत्तरार्धेनउदकादुत्तारयेत्॥नीयमानावधूर्यदिबंधुवियोगादिनारोदिति॥तदाजीवंरुदंतीतिऋचंजपेत्॥अयंविधिःस्वग्रामेपिभवत्यविशे
षात्॥शोभनेषुदेशवृक्षचतुष्पथेषुमाविदन्परिपंथिनइतिजपेत्॥वसतौवसतावीक्षकाःसंतिचेत्सुमंगलीरियंवधूरित्यृचंवीक्षेत॥इहप्रियं
इत्यनयागृहंप्रवेशयेद्वधूं॥अयंविधिःस्वग्रामविवाहेपिभवति॥अत्रायमनुष्ठानक्रमः॥वरोवधूसूक्तमंत्रेणयथार्हंयानमारोप्यविवाहाग्निंश
कटारोपितमजस्रमग्रतोनयन्सुमंगलीसूक्तंपठद्भिर्विप्रैर्बंधुभिःसुवासिनीभिरष्टमंगलसंज्ञकदर्पणपूर्णकलशकन्यापुष्पाक्षतदीपमालाध्व
जलाजैर्मंगलतूर्यनादैश्चसहितःसितछत्रयुतःस्वगृहद्वारेसुवासिनीभिर्नीराजितविग्रहोवधूंपाणौगृहीत्वाशुभेमुहूर्तेइहप्रियंप्रजयातेइतिस्वगृ-
हंप्रवेशयेत्स्वयंचप्रविश्यतंडुलचतुष्केकुलदेवतांलक्ष्मींचसंपूज्यविप्रैःपुण्याहंवाचयेत्॥ततःगृहप्रवेशनीयहोमःकार्यः॥अस्माभिस्त्वाचारानु
सारेणपूर्वंकर्तव्यतयोक्तः॥ततःशुभेदिनेस्वस्त्यादिवाचयित्वास्वलंकृतःस्वलंकृतवधूंरात्रावुपगच्छेत्॥नागवल्लीस्तंभबलिप्रयोगस्तुसर्वे

देशे घनुष्ठानाभावान्नोक्तः॥ इति श्रीरा॰ नारायणभट्टकृते प्रयोगर॰ वधूसहितस्य वरस्य गृहप्र॰ वि॰ ॥ ॥ आश्वलायनमाचार्यं प्रणम्य पित
रं गुरुं ॥ भट्टरामेश्वरसुतो भट्टनारायणः सुधीः ॥१॥ पंचविंशतिसंस्कारेषूक्तां द्वादशसंस्कृतीः ॥ पाकयज्ञान् सप्त शिष्टान् वक्ति शिष्टेष्टतुष्टये
॥२॥ तत्र ॥ अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते ॥ संस्काररहिता ये तु तेषां जन्म निरर्थकं ॥३॥ पंचविंशतिसंस्कारैः संस्कृता ये द्विजातयः
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयंत्रिताः ॥४॥ गर्भाधानं पुंसवनं सीमंतो बलिरेव च ॥ जातकृत्यं नामकर्म निष्क्रमोन्नाशनं परं ॥५॥ चौल-
कर्मोपनयनं व्रतानां च चतुष्टयं ॥ स्नानोद्वाहौ चाग्रयणमष्टका च यथातथम् ॥६॥ श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणं ॥ उत्सर्गश्चाप्युपा
कर्म महायज्ञाश्च नित्यशः ॥७॥ श्रावण्यादिषु तिसृषु पौर्णमासीषु क्रमेण श्रवणाकर्माश्वयुजीकर्म प्रत्यवरोहणानि त्रीणि कर्माणि पर्वण्यमा
वास्यायां क्रियमाणं पार्वणमित्यर्थः ॥ संस्कारा नियता ह्येते ब्राह्मणस्य विशेषत इति ॥ आश्वलायनाचार्येणोपक्रमोपसंहारयोर्नियतत्वोक्त्या जनानै
रर्थक्यरूपाकरणनिंदया च पंचविंशतिसंस्काराणां नित्यतोक्ता पुनश्चैषां नैमित्तिकवार्षिकमासिकनित्यभेदेन चतुर्विधत्वं स एवाह ॥ नैमित्तिकाः
षोडशोक्ताः समुद्वाहावसानकाः ॥ सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥ मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकं ॥ महायज्ञास्तु नित्याः
स्युः संध्यावच्चाग्निहोत्रवदिति ॥ नित्याः प्रत्याहिका इत्यर्थः ॥ एवं पंचविंशतिसंस्कारेषु गर्भाधानाद्या अष्टादशोक्ताः ॥ इदानीं श्रवणाकर्माद्याः
सप्तावशिष्टा उच्यंते ॥ तत्र तावत् श्रवणाकर्मोच्यते ॥ श्रवणाकर्म सर्पबलिं च भुक्त्वापि केचित्कुर्वंति ॥ युक्तं तूपवासिनैव कार्यमिति श्रावण्यां पौ

प्र·र
८९

र्णमास्यांपूर्वाण्हेवृद्धिश्राद्धंकृत्वादिवैवव्रीहीणांयवानांवालौकिकाग्नौभर्जनेनप्रस्थमिताधानाःकृत्वारवंडिनयवव्रीह्यन्यतरस्यलौकिकाग्नौभर्ज
नंकृत्वानतिपिष्टरूपैःसक्तुभिर्नवंकलशंप्रपूर्यबलिनिक्षेपसाधनभूतांवैकंकतदर्वीमपिसंपाद्यतदुभयंगृहकाष्ठादिलंबिनेनवैशिक्येनिधायबल्य
र्थंगृहेप्राच्यांकस्मिंचिद्देशेपरिगृण्हीयादिहकरिष्यामीतिव्रीहीश्चरुपात्रंपुरोडाशकपालंचसंपाद्यधानाःसमार्धीकृत्यअर्धालौकिकाज्येनाक्ताः
कृत्वैकपात्रेनिधाया परा अनक्ता अर्धा धानाःपात्रांतरेनिदध्यात् ॥ततोस्तमितेसूर्येशुचिःसपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्यममः
पुत्रपौत्रादीनांचरोगनिवारणसमस्तपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंनित्यविधिरूपंश्रवणाकर्मकरिष्येइतिसंकल्प्यसमिद्द्वयंत्रयंवादायपु
नर्देशकालौसंकीर्त्यास्मिन्श्रवणाकर्महोमेदेवतापरिग्रहार्थं मन्वाधानंकरिष्ये ऽस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मादिचक्षुषीआ-
ज्येनेत्यंतमुक्त्वाप्रधानदेवतामग्निंचतुर्वारंचरुद्रव्येणाच्युतभौमाग्निंपुरोडाशेनअग्निमा शयाज्येनवाजिदेवताधानाद्रव्येणशेषेणस्विष्टकृत
मित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा ॐ भूर्भुवःस्वरित्यग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाचरुपुरोडाशदेवतानांपंचानांतूष्णींच
तुरश्चतुरोमुष्टीन्निरूप्यतत्संख्ययातूष्णींप्रोक्ष्यावघातादिकृत्वाप्रक्षाल्यचरुपुरोडाशतंदुलान्यथाभागंपृथक्कृत्यपुरोडाशार्थस्तवर्यांकिंचित्
पिष्टीकृत्यकृष्णाजिनेनप्रस्कंद्यपत्न्यादास्यावापेषणेनचूर्णयित्वाततश्चर्वर्थमग्नौदक्षिणभागेस्थालींनिधायाग्नेःपश्चात्परिस्तरणमध्येउ
पवेषाख्येप्रादेशमितयज्ञियकाष्ठेनद्वावंगारौपृथक्कृत्यतयोरेकंवायव्येनिरस्यापउपस्पृश्यावशिष्टमंगारमवस्थाप्यतस्मिन्कपालमुपधा

श्र·क·
८९

यत्तदुपर्युपरमंगारं निक्षिप्य कृत्वा तात्रे पिष्टसेकार्थमपः प्रताप्य तन्नारावं प्रक्षाल्याग्नौ प्रताप्य शोषयित्वा स्थाल्यग्रे निधाय शीते तस्मिन् पवित्रवति पुरोडा
शार्थं पिष्टं निक्षिप्य पूर्णपात्रोदकं स्रुवेण पिष्टे प्रक्षिप्य पूर्वं प्रतप्तोदकेन पिष्टं संमिश्र्य पिंडीकृत्य पूर्वं समुपहितकपालादंगारं तृणेनापोह्य चरुस्था
ल्यां तंडुलानोप्याश्वशफमात्रं कूर्माकृतिं पुरोडाशं कृत्वा कपाले निधायाद्भिः श्लक्ष्णीकृत्याज्यं संस्कृत्याज्यादीनि चत्वारि हवींषि त्रिः पर्यग्निं कृ
त्वा पुरोडाशमुल्मुकैः प्रताप्य दर्भैः प्रज्वाल्य तत्रैव स्रुक्शृतं श्रपयित्वा तदुपरि सांगारं भस्म निक्षिप्य हस्तं प्रक्षाल्य संवापपात्रं प्रक्षालयेत् ॥ ततः
आज्यमुद्वास्य बर्हिष्यासाद्य स्रुवं स्रुचं च संमृज्य पुरोडाशोपरिस्थ भस्मादि तृणेनापोह्य चरुपुरोडाशावभिघार्योदगुद्वास्य चरुं बर्हिष्यासा
द्य तदुत्तरतः पात्रांतरस्थितलौकिकाज्येन पुरोडाशमज्जयेत् ॥ प्रकटपृष्ठं वा कुर्यात् ॥ तदुत्तरतः अक्ता अनक्ताश्च धाना आसादयेत् प्रधाना –
द्याज्यभागांते कृते अभ्युक्षिताच्चरोर्दर्व्या यथागोत्रं चतुर्वारं पंचवारं वावदानधर्मेणावदाय अग्ने नयेत्यादिमंत्रैर्ऋगंते स्वाहाकारं पठन् आहुति
चतुष्टयं जुहुयात् ॥ अग्नय इदं न ममेत्याहुतिचतुष्टयेपि त्यागः ॥ अग्ने नयेत्यादिकर्क्चतुष्टयस्य अगस्त्यऋषिः अग्निर्देवता त्रिष्टुप्छंदः ॥ श्र
वणाकर्मप्रधानचरुहोमे० ॐ अग्ने नय सुपथा० स्वा० १ ॐ अग्ने त्वं पारया० स्वा० ॐ अग्ने त्वमस्मद्युयु० स्वा० २ ॐ पाहि नो अग्ने पायुभि० स्वा०
४ ततः सव्यपाणिना दक्षिणपाणिं प्रोक्ष्योपस्तीर्य कृत्स्नं पुरोडाशमादाय हविरभिघार्य पंचावत्ती तु त्रिरभिघार्य ॐ अच्युताय भौमाय याग्नय इदं
न ममेति त्यजेत् ॥ ततः यस्मिन्नाज्ये पुरोडाशः स्थापितस्तदाज्यैकदेशं ॥ मा नो अग्न इत्यस्यागस्त्यऋषिः अग्निर्देवता त्रिष्टुप्छंदः ॥ आशया

ज्यहोमेवि॰॥ ॐ मानोअग्नेवस्त्रजोअघायापरादाःस्वा॰॥ इतिस्रुवेणहुत्वा अग्नयइदंनममेतित्यजेत्॥ ततःस्वांजलावन्येनोपस्तृतेप्राशु
क्ताधानाद्विस्त्रिर्वावापर्यधित्वाभिघार्य शंनोभवन्त्वित्यस्यवसिष्ठोवाजिनस्त्रिष्टुप्॥ श्रवणाकर्मप्रधानलाजहोमेवि॰॥ ॐ शन्नोभवंतुवा॰
वन्नमीवाःस्वा॰॥ अंजलिनाहुत्वावाजिभ्यइदंनममेतित्यजेत्॥ ततोनभ्यक्ताधानाःपुत्राद्यमात्येभ्योदत्वाचरुधानैकदेशातःस्विष्टकृ
तंहुत्वाहोमशेषंसमाप्यधृतपवित्रग्रंथिंविस्रस्यशकृद्देशेक्षिपेत्॥ ॥ इतिश्रीना॰प्रयोगरत्ने श्रवणाकर्मप्र॰॥ ॥ अथसर्पबलि
प्रयोगः॥ ॥ आचम्यपवित्रेधृत्वाप्राणाना॰ देशकालौसंस्मृत्वाममभार्यापुत्रामत्तदुहितृसमेतस्यभौमांतरिक्षदिव्यदिश्यसर्पेभ्यः
संभावितबाधापरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंनित्यविधिरूपंसर्पबल्याख्यंकर्मकरिष्येइतिसंकल्प्यपूर्वंशिक्यस्थापितदर्वीमा-
दायशिक्यस्थापितकलशाहितसक्तुभिस्तांमापूर्यगृहीत्वागृहान्निर्गत्यप्राच्यांदिशिपूर्वपरिगृहीतंदेशमासाद्यप्रोक्ष्य ॐ सर्पदेव-
जनेभ्यस्स्वाहेतिमंत्रेणदर्वीस्थसक्तुंतत्रप्राङ्मुखवोनिक्षिप्यसर्पदेवजनेभ्यइदंनममेतित्यजेत्॥ बलेर्बलिदातुश्चांतरांकेनापिव्यव
धानंनकार्यमापरिदानात्॥ ततःकृतांजलिः॥ ॐ येसर्पाःपार्थिवायेअंतरिक्ष्यायेदिव्यायेदिश्यास्तेभ्यइमंबलिमाहार्षंतेभ्यइमंबलि
मुपाकरोमीतिमंत्रेणसर्पानुद्दिश्यसंहताभ्यांपाणिभ्यांनमस्कृत्यबलिंप्रदक्षिणीकृत्यपश्चाद्बलेरुपविश्य ॐ सर्पोसिसर्पाणांसर्पा
णामधिपतिरस्यन्नेनमनुष्यांस्त्रायसेपूपेनसर्पान्यज्ञेनदेवांस्त्वयिमासंतंत्वयिसंतःसर्पामाहिंसिषुर्ध्रुवांतेपरिददामीतिमंत्रमुपा

शूसकृज्जपित्वाऽयेश्वक्रमेणनामग्राहंपुत्रादीन्परिदद्यादेवं॥ ॐवासुकंतेपरिददामीतिपुत्रं॥ ॐवासुकांतेपरिददामीत्यप्रत्तांदुहितरं॥ ॐवासुकांतेप
रिददामीतिभार्यां॥ ॐवमांतेपरिददामीत्यात्मानमंते॥ अन्यःकर्ताचेन्मांपदस्थानेयजमाननामद्वितीयांतमुक्त्वापरिददामीतिवदेत्॥ ततःप्र
तिपदमारभ्यप्रत्यवरोहणपर्यंतंसायंप्रातःकालेषुतथैवदर्व्यानेरेवसक्तुभिःशुचिदेशेबलिंहरेत्॥ तत्रनमस्कारादिपरिदानांतंनकार्यं॥ अथ-
वाश्रावणप्रतिपदमारभ्ययस्मिन्नहनिप्रत्यवरोहणंमार्गशीर्षशुक्लचतुर्दश्यांपौर्णमास्यांवाक्रियतेतस्मादर्वाचीनदिनानिह्रासवृद्धिभ्यांपरिग-
णय्यतेषुयावंतःसायंप्रातःकालास्तावतोबलीस्तद्देवदद्यात्॥ तद्यच्चप्रथमबलिदानांतेनमस्कारपरिदानांतंसकृदेवनप्रत्येकं॥ ततःपवित्रग्रंथि
विस्त्रस्यशुद्धदेशेक्षिपेत्॥ अत्रतदहरेवाखिलबलिदानंमुख्यःपक्षः॥ श्रवणाकर्मसर्पबलिप्रतिवर्षंकार्यं॥ अत्रविशेषश्रवणात्॥ वृद्धिश्रा
द्धमुभयार्थंतंत्रेणैवकार्यं॥ ॥ इतिनारायणभट्टविरचितेप्रयोगरत्नेसर्पबलिप्र०॥ ॥ अथाश्वयुजीकर्मप्रयोगः॥ ॥ आश्वयुजीमासे
पौर्णमास्यांआश्वयुजीकर्मकार्यं॥ पूर्वेद्युःकर्तोपलेपनादिनाप्रत्यवरोहणेवक्ष्यमाणमार्गेणनिवेशनमलंकृत्यभूमिंचसमीकृत्यपरेद्युःस्त्रीपु
त्रादिसमेतोभ्यंगादिविशेषस्नानंविधायशुक्लशुचिवाससाआनतोपासनंहुत्वाभ्युदयिकश्राद्धंविधायधृतपवित्रःप्राणानायम्यदेशकालौसंस्मृ
त्वाममस्त्रीपुत्रादिसहितस्यन्यूनापेक्षितविषयसंपूर्णताप्रूर्णानवसादनांसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनित्यविधिरूपमाश्वयुजीकर्मकरि॰
ष्ये इतिसंकल्प्याग्निमुपसमाधायास्मिन्नाश्वयुजीकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वात्रप्रधानंपशुप

तिं चरुद्रव्येण पृषातकं पृषातकद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यंतमुक्त्वा समिद्द्वयं त्र्यंवाग्नावाधाय परिसमूहनादि पूर्णपात्रनिधानांतं कृ
त्वाग्नेः प्रत्यक् शूर्पे पवित्रवति पशुपतये त्वा जुष्टं निर्वपामीति चतुरो मुष्टींश्चवर्थं निरूप्य तत्संख्यया तथैव प्रोक्षणावघातादि चरुश्रपणांतं कृत्वाज्यमि
श्रं पयः पृषातकाख्यं हविरंतरं कृत्वाज्यं संस्कृत्य पृषातकचरुभ्यां सह पर्यग्निं कृत्वाज्योद्वासनादि आज्यभागांतं हुत्वा स्रुतादिभिरन्वारब्धो स्वस-
न्निधौ वातानुपवेश्यावदानधर्मेण चरुमवदाय ॐ पशुपतये शिवाय शंकराय पृषातकाय स्वाहेति हुत्वा पशुपतये शिवाय शंकराय पृषातकायेदं न
ममेति त्यजेत् ॥ ततो यजमानोंजलावन्य उपस्तीर्य स्रुवेणैव पृषातकं द्विरभिघारयेत् ॥ ततो यजमानः ॥ ॐ ऊनं मे पूर्यतां पूर्णं मे मोपसदत् पृषात
काय स्वाहेत्यंजलिनैव हुत्वा पृषातकायेदं न ममेति त्यजेत् ॥ चरुपृषातकशेषात्स्विष्टकृतं हुत्वा इध्मसंनहनादि होमशेषं समाप्य धृतपवित्रग्रंथिं-
विस्रस्य शुचिदेशे क्षिपेत् ॥ ॥ इति नारायणभट्टकृतप्रयो० आश्वयुजीकर्मप्रयोगः ॥ ॥ अथाग्रयणहोमप्रयो० ॥ ॥ शरदि पौर्णमास्या
ममावास्यायां वा पर्वणि तद्लाभे कृत्तिकादि विशाखांत देवनक्षत्रे ऽन्यतमे चंद्रानुकूल्ये आग्रयणं कार्यं ॥ प्रातरोपासनहोमं कृत्वा संकल्पपूर्वकमाभ्यु
दयिकं श्राद्धं विधाय पवित्रे धृत्वा प्राणानायम्य देशकालौ संकीर्त्य मम रोगजरानिवृत्ति श्रीयशोन्नप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरू
पमाग्रयणं करिष्ये इति संकल्प्यास्मिन्नाग्रयणाख्ये कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये इत्यादि चक्षुषी आज्येनेत्यंतमुक्त्वात्र प्रधानं इं
द्राग्नी विश्वान् देवान् द्यावापृथिव्यौ चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यंतमुक्त्वा समिद्द्वयं त्र्यंवाग्नावाधाय परिसमूहनादि पूर्ण

पात्रनिधानांतं प्राक्तनं तंत्रं कृत्वा मध्यगग्नेः दर्भेपवित्रवति तूष्णीं स्थित्वा चतुरश्चतुरो मुष्टीन्निरूप्य तत्संस्कृत्य यानर्थे व प्रोक्ष्यावघातादि चरुः श्रपणां
तं कृत्वाज्यसंस्काराद्याज्यभागांतं कृत्वावदानधर्मेण चरुमवदाय ॐ सजूर्ऋतुभिः सजूर्विधाभिः सजूरिंद्राग्निभ्यां स्वाहा० इंद्राग्निभ्यामिदं न मम
नित्यस्त्वा पुनरवदाय ॐ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा० विश्वेभ्यो देवेभ्य इदं० पुनरवदाय ॥ ॐ सजूर्ऋतु० द्यावापृ
थिवीभ्यां स्वाहा० ॥ द्यावापृथिवीभ्यामिदं न० एवं तिस्र आहुतीः हुत्वा स्विष्टकृत् हुत्वावशिष्टं पात्रांतरे कृत्वा तत्पात्रं सव्यपाणौ धृत्वा ॐ प्रजा
पतये त्वाग्रहं गृण्हामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय इति मंत्रेण दक्षिणेन पाणिना अभिमृश्य ॐ भद्रान्नः श्रेयः समनैष्ट देवास्त्वया
वसेन समशीमहि त्वा ॥ स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे इति मंत्रेण प्राश्य द्विराचम्य तत्रैव उपविष्टः ॥ ॐ अमोसि प्राण त
दृतं ब्रवीम्यमासि सर्वाननु प्रविष्टः ॥ स मे जरां रोगमपनुद्य शरीराद् मामएधि मा मृथा म इंद्र इति मंत्रेणात्मनो नाभिमालभेत ॥ ततः पत्नी मध्यमहविःशेष
ममंत्रकं प्राश्नीयात् ॥ ततो यजमान इध्मसन्नहनहोमादि परिषेचनांतं कर्मशेषं समाप्य धृतपवित्रग्रंथिं विस्रस्य शुचिदेशे क्षिपेत् ॥ इदमाग्रय
णं यदाश्वयुज्यां पौर्णमास्यां क्रियते तदैककालत्वादाश्वयुजीकर्मणा समानतंत्रता भवति ॥ तत्राश्वयुजीकर्मप्रधानहोमं कृत्वाग्रयणप्रधानहोमः
द्वयोश्चवोरेकं स्विष्टकृदित्यादि ज्ञेयं ॥ यवाग्रयणं न कार्यं ॥ श्यामाकैस्तु प्रस्तरं कुर्यान्नाग्रयणं ॥ शास्त्रांतरे दृष्टत्वात् ॥ इदं चाग्रयणमकृत्वा न
वान्नभक्षणस्य निषिद्धत्वात् ॥ दुर्भिक्षे पुरातनधान्यालाभे नवधान्यभक्षणाधिकारार्थं मलमासेपि कार्यं ॥ अनापदि तु शरद एव ॥ आग्रय-

णाकरणे प्रायश्चित्तं कारिकायां अकृत्वाग्रयणो श्नीयान्नवान्नं यदि वै ततः ॥ वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तुवा ॥ ॥ इति नारायणभ० स्मा
र्ताग्रयणप्र० ॥ ॥ अथ प्रत्यवरोहणं ॥ ॥ तच्च मार्गशीर्ष्यां पौर्णमास्यां तत्पूर्वेद्युश्चतुर्दश्यां वा कार्यं ॥ दिवैव गृहकुड्यलेपनतदाच्छादन
निम्नोन्नतभूमिसमीकरणप्ररूढापामार्गाद्युन्मूलनरूपनिवेशनालंकारं विधाय फलरहितधान्यतृणाख्यपलालनिर्मितं च शयनार्थं कटं
संपाद्य संकल्पपूर्वकं प्रत्यवरोहणांगं नांदीश्राद्धं विधाय सूर्ये स्तमिते सायं औपासनं हुत्वा शुचिः पवित्रे धृत्वा देशकालौ संकीर्त्य मम स्त्री
पुत्रादिसहितस्य जलस्थलचरसर्पबाधानिवृत्त्यभयहेमंतसौमनस्यद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपं प्रत्यवरोहणाख्यं कर्म करि०
इति संकल्प्याग्निमुपसमाधाय समिद्द्वयं त्रयं वादाय पुनर्देशकालौ स्मृत्वा क्रियमाणे प्रत्यवरोहणे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मि
न्नन्वाहिते शाविस्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा प्रधानं हविः श्वेताय पायसेनेध्मसन्नहनेन रुद्रमित्यादि सद्योयक्ष्य इत्यंतमुक्त्वा समिधा
वस्त्रावादध्यात् ॥ अत्र स्विष्टकृन्नास्ति तेन न तत्कीर्तनं परिसमूहन पूर्णपात्रनिधानांतं कृत्वा प्रधानदेवतार्थं श्वेताय द्विश्चतुरो वा व्रीहीन्मुष्टींस्तूष्णीं
निरूप्य तथैव प्रोक्ष्य पयसि चरुं श्रपणाज्यसंस्कारा द्याज्यभागांतं कृत्वा सुतादिभिरन्वारब्धो वृद्धानधर्मेणावदाय ॐ अपश्वेतपदाजहि पूर्वे
णचापरेणच ॥ सप्तचवारुणीरिमाः सर्वाश्चराजबांधवीः स्वाहा ॥ ॐ नवैश्वेतस्याभ्यागारेहिर्जघानकिंचन ॥ श्वेतायवैदार्वायनमःस्वाहेति द्वे
पायसाहुती हुत्वा उभयत्र श्वेतायेदं न ममेति त्यजेत् ॥ ततः ॐ अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपित्वा शिवो नः सुमना भवे

स्तुत्वा हेमंतेनेति संबुध्यं तं मनसा स्मरेत् ततो ग्नेः पश्चाद्देशे पूर्वपलालनिर्मितं कटं कर्ता शयनार्थं स्वयमास्तीर्य स्त्रीपुत्रादिसहितस्तस्मिन्नुपविश्य-
स्योना पृथिवि मेधातिथिर्भूमिर्गायत्री जपे वि० ॐ स्योना पृथि० प्रथ इति पठेत् ॥ एतदारभ्य मंत्रोच्चारणार्हाः स्त्रीबालव्यतिरिक्ताः स्योना पृ-
थिवी स्यादिस्वस्त्ययनपर्यंतान् मंत्रान् जपेयुः ततः कर्ता प्राक्शिरा उदङ्मुखो दक्षिणपार्श्वेन शयीत ॥ गृहिणोनंतरं यथाज्येष्ठं सर्वे पुत्रपौत्रास्त
थैव शयीरन् ॥ तत उत्थायोपविश्य प्राङ्मुखाः ॥ अतो देवा मेधातिथिर्देवा गायत्री ॥ जपे वि० ॐ अतो देवा इति ऋचं त्रिर्जपित्वा पुनरपि तथैव श
यित्वोत्थायोपविश्य दक्षिणामुखाः ॥ अतो देवा इति प्रथमपादं सकृज्जपित्वा पुनरपि शयित्वोत्थायोपविश्य पश्चिमाभिमुखाः यतो विष्णुर्विचक्र
म इति द्वितीयपादं सकृज्जपित्वा पुनस्तथैव शयित्वोत्थायोदङ्मुखाः उपविश्य पृथिव्याः सप्त धामभिरिति तृतीयपादं सकृज्जपेयुः ॥ ततः क
र्तास्विष्टकृद्धर्यं इध्मरज्जुप्रहरणादिकर्मशेषं समाप्य पवित्रग्रंथिं विस्रस्य शुचिदेशे क्षिपेत् ॥ ततः सर्वे यथायथाशय्यां शयित्वोत्थायोदिते
सूर्ये कृतनित्यक्रियाः संगम्य सौर्याणि स्वस्त्ययनानि जपेयुः ॥ तानि च ॥ उदु त्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्व ऋषिः ॥ सूर्यो देव
ता ॥ नवाद्या गायत्र्यः ॥ अंत्याश्चतस्रोनुष्टुभः ॥ जपे विनि० ॥ नवर्चमेवैतज्जप्यमिति कारिकायां ॥ चित्रं देवानामिति षडृचस्य सूक्तस्यां
गिरसः कुत्सः सूर्यस्त्रिष्टुप् ॥ नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सौर्योभितपाः सूर्यो जगती ॥ दशमी त्रिष्टुप् ॥ सूर्यो न इति पंचर्चस्य सूक्त
स्य सौर्यश्चक्षुः सूर्यो गायत्री ॥ आ नो भद्रा इति दशर्चस्य सूक्तस्य राहूगणो गोतमो विश्वे देवाः पंचदशाद्याः सप्तमी च जगत्यः ॥ षष्ठी विराट्स्था

पास्त्रिष्टुभः ॥ स्वस्तिनोमिमीतामितिपंचर्चस्यात्रिर्विश्वेदेवाः ॥ आद्यात्रिष्टुभोऽंत्यानुष्टुभौ ॥ परावतइतिसप्तदशर्चस्यनाभानेदिष्ठोमानवोविश्वेदेवाजगती
अंत्येद्वेत्रिष्टुभौ ॥ सर्वेषांजपेविनियोगः ॥ एतानिसर्वाणिजपेयुः ॥ अतिबहुत्वादत्रनलिख्यंते ॥ ततोयजमानःसंस्कृतान्नेनस्वादुव्यंजनयुक्तेनत्रीनधिकान्वा
शक्त्याब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाचयेदिति ॥ इदमपिकेचिदुक्त्वाकुर्वंति ॥ युक्तंतुपवित्रक्षेपणांतमुपवासीकृत्वाभुक्त्वाशयीतेति ॥ ॥ इतिप्रत्य
वरोहणम् ॥ ॥ अथपिंडपितृयज्ञः ॥ ॥ सचानाहिताग्निनापिकार्यः ॥ एवमनाहिताग्निर्नित्येश्रपयित्वातिप्रणीयजुहुयादितिसूत्रात् ॥ नित्येऔपासनाग्नावि
त्यर्थः ॥ तस्यचायमाहिताग्नेर्विशेषः ॥ हविःश्रपणंकृत्वातिप्रणयनंकर्तव्यं ॥ ततोतिप्रणीतस्योपसमाधानंपरिस्तरणंचकृत्वा ततोवागतिप्रणीतादृक्षादस
माने ॥ यस्मिन्नहोरात्रेपर्वप्रतिपदोःसंधिस्तत्रापराह्णेयागादिनेतत्पूर्वदिनेवापिंडपितृयज्ञःकार्यः ॥ अहोरात्रतिथिसंधौतुयागपूर्वदिनएवेतिवृत्तिकृत्
उक्तापराह्णेऔपासनाग्निंप्रज्वाल्यशुचिःप्राणानायम्यधृतपवित्रोदेशकालौस्मृत्वापितृतृप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंकरिष्येइतिसंकल्प्या
ग्नेयाभिमुखोग्निंध्यात्वापरिसमूह्याग्नेयाग्रकैर्दर्भैःपरिस्तीर्याग्नेरीशान्यादायव्यांवाग्नेयाग्रकान्दर्भानास्तीर्यपर्युक्ष्यतेषुचरुस्थालीशूर्पस्फ्योलूखल
मुसलस्रुवस्रुवकृष्णाजिनसकृदाच्छिन्नेध्मप्रेक्षणजलपूर्णकमंडलूनितियथायोग्यंन्यग्बिलान्येकैकशआग्नेयसंस्थान्यासादयेत् ॥ काष्ठखड्गः
स्फ्यः ॥ आज्यधारणार्थंगस्रुवा ॥ शेषंप्रसिद्धं ॥ पात्राण्युत्तानानिकृत्वाकमंडलुजलेनप्रोक्ष्यस्थालींशूर्पंचादायाग्नेर्दक्षिणतोवस्थितव्रीहिमच्छकटंद
क्षिणातआरुह्यस्थालींशूर्पेनिधायव्रीहिभिःपूरयित्वायथास्थालीमुखोपरिस्थाःशूर्पेपतंतितथानिमृज्यस्थाल्यास्यदेशतःपतितान्व्रीहीन्शक

देप्रास्याग्नेःपश्चिमतोवायव्यग्रीवेआस्तीर्णेकृष्णाजिनउलूखलंनिधायतस्यस्थालीस्थान्व्रीहीन्निधायाग्नेयाभिमुख्यातिष्ठेत्पत्न्यावहतान्सकृन्फलीकृ
तानविविच्यसकृत्प्रक्षालितान्जीवतंडुलान्श्रपयेत्॥यदुक्तंजीवतंडुललक्षणं॥तन्मैत्रायणीयवाराहसूत्रे॥पुराणाव्रीहयोयेषांबीजमुप्तंप्ररोहति॥तेभ्यो
येतंडुलाजातास्तेविज्ञेयाजीवतंडुलाः॥चरुमनुद्रुत्यैवाग्नेरेकंप्रदीप्तमुल्मुकंगृहीत्वाग्नेराग्नेय्यांदिशिकृत्वेध्मचित्स्थंडिलेयेरूपाणिप्रतिमुंचमानाअसुराःसं
तस्वधयाचरंति॥परापुरोनिपुरोयेभरंत्यग्निष्टाल्लोकात्प्रणुदात्यस्मादितिमंत्रेणनीत्वातमतिप्रणीताख्यमग्निमाग्नेयाग्रैःकुशैःपरिस्तीर्यदक्षिणाभिमुखो
पहतासुरारक्षांसिवेदिषदइतिमंत्रेणोपासनातिप्रणीतयोःअंतरालेस्फ्येनसव्योत्तरपाणिद्वयगृहीतेनकुशमूलेनवाग्नेयाभिमुखंलेखामुल्लिख्यतामद्भिर
भ्युक्ष्यसकृदाच्छिन्नबर्हिषाच्छाद्यानुत्सूतंआज्यंविलापितमुत्सूतंनवनीतंवास्रुवायामासिच्याग्नेर्दक्षिणतःकुशेष्वासाद्यस्रुवंसंमृज्यतेनस्रुवास्थमाज्यमादाय
चरुमभिघार्योदगुद्वास्यातिप्रणीताग्नेःपश्चाद्बर्हिष्यासाद्यतद्दक्षिणतोऽभ्यंजनांजनकशिपूपबर्हणान्यासादयेत्॥ततोतिप्रणीताग्नेःपश्चिमतउपविश्या-
र्चयित्वाप्राचीनावीत्यभिघारितमरत्निमितंपंचदशदारुकमिध्मंपितृतीर्थेनतूष्णीमग्नावभ्याधायस्रुवेणाज्यमादायमेक्षणमुपस्तीर्यउ-
द्धृतचरुंद्विधाविभज्योत्तरभागमध्यादंगुष्ठपर्वमात्रंमेक्षणेनावदायपुनःपूर्वभागादवदायपात्रस्थमवत्तंचाभिघार्यसोमायपितृमते-
स्वधानमइत्यतिप्रणीताग्नेर्दक्षिणभागेपराचीनपाणिर्हुत्वासोमायपितृमतइदंनममेतित्यजेत्॥पुनःपूर्ववद्दक्षिणभागस्थचरोरवदायाग्नये-
कव्यवाहनायस्वधानमइत्यग्नेरुत्तरभागेपूर्ववद्धुत्वाअग्नयेकव्यवाहनायेदंनममेतित्यक्त्वोपवीतीतूष्णींमेक्षणमग्नावनुप्रहरेत्॥स्वधानम-

प्र·र
९४

स्थानेस्वाहाकारेणवाहोमस्तदाहुत्वोर्व्यंत्स्यय उपवीतिताचमेक्षणानुप्रहरणपर्यंतं यथाग्नयेकव्यवाहनायस्वाहेतिप्रथमाहुतिः सोमाय
पितृमतेस्वाहेतिद्वितीयाल्यागश्च आहुतिवत् ॥ ततःप्राचीनावीतीपूर्वकृतलेखायांस्थापितकमंडलुजलंदक्षिणहस्तेनपितृतीर्थेनाग्नेयापव
र्गंशुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाः ॥ इतिमंत्रैस्त्रिर्निनयेत् ॥ ततोहुतशेषेणसाज्येनत्रीन्पिंडान्कृत्वातस्यांलेखा
यांप्राचीनावीतीपराचीनपाणिःपितृतीर्थेनतान्पिंडानाग्नेयापवर्गंपित्रादिभ्योदद्यात् ॥ तद्यथा ॥ एतत्तेऽमुकशर्मन्येचत्वामत्रानुतेभ्य
श्चेतिपित्रे एवंपितामहप्रपितामहयोरपि ॥ ततः अत्रपितरोमादयध्वं यथाभागमावृषायध्वमितिसकृत्पिंडाननुमंत्र्यसव्येनपार्श्वेन
त्वा हस्तोदङ्मुखोभूत्वायथाशक्तिप्राणान्नियम्यावृत्त्या ॥ अमीमदंतपितरोयथाभागमावृषायिषतेतिपुनस्ताननुमंत्र्यउपवीतित्वकृशे
षमवघ्रायाचम्यप्राचीनावीतिपूर्ववच्छुंधंतांपितरइत्याद्यैस्त्रिभिःकमंडलुजलंपिंडांतेनिनीयामुकशर्मन्नभ्यंक्ष्वेतित्रिभ्योपिपिंडेष्वभ्यंज
नंतैलंघृतंवादर्भेणदत्वाऽमुकशर्मन्नंक्ष्वेतितथैवांजनंदद्यात् ॥ अथ एतद्वःपितरोवासोमानोतोन्यत्पितरोयुङ्ध्वमितिप्रतिपिंडंमंत्रावृत्त्या
नववासोदशां ॥ पंचाशद्वर्षाधिकवय श्चेत्स्वप्रकोष्ठहृद्यान्यतंलोमवादत्वाकशिपूपबर्हणेनिवेद्यसव्योत्तराभ्यांकृतांजलिराग्नेयाभिमु
खःपिंडाननुपतिष्ठेतमंत्रैः ॥ यथा ॥ नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवाय
नमोवःपितरोरसाय ॥ स्वधावःपितरोनमोवःपितरोनमएताद्युष्माकंपितरइमा अस्माकंजीवावोजीवंतइहसंतःस्याम ॥ मनोन्वाहुवामहे

पिं·पि·
९४

इतिचतिसृभिर्मंत्राः॥ अथ॥ परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः॥दत्त्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छतेति-
मंत्रेणपिंडानाग्नेयाभिमुखंसकृदुत्तानेनहस्तेनचालयेत्॥ ततःअग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशं॥ ऋध्यामातओहैः इतिओपासना
ग्निसमीपंगत्वा॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुकरोतुमामनेनसमितिसं-
त्वंगार्हपत्यपदरहितंजपेत्॥ केचित्तुद्वाभ्यामपिमंत्राभ्यामग्न्युपस्थानमाहुः॥ अथवीरंमेदत्तपितरइतिमंत्रेणमध्यमंपिंडमादायसुपुत्रप्रार्थ्ये
पत्न्याप्राशयेत्॥ आधत्तपितरोगर्भंकुमारंपुष्करस्रजं॥ यथायमरपाअसत्इतिमंत्रेण अयंमंत्रः पत्न्याइतरौपिंडावप्स्वग्नौप्रणीतवाक्षिपे
त्॥ आसादितानांद्रव्यपात्राणामध्येसकृदाच्छिन्नबर्हिरिध्मप्रोक्षणानांविनियुक्तत्वात्॥ अवशिष्टानियानितवतेषांद्रव्यउत्सर्गः॥ अवशि
ष्टमेकंतृणेनसहोत्सृजेत्॥ अत्रपित्रादिनामाज्ञानेतत्तन्नामस्थानेएतत्तइत्यस्यानंतरं॥ ततपितामहप्रपितामहेतिशब्दाःक्रमेणपिंडदानमंत्रे
प्रयोज्याः॥ एकस्यद्वयोर्वानामाज्ञानेपियथास्थानंततादिशब्दप्रयोगोन्यत्रनामप्रयोगः॥ अत्रपित्रादीनांमध्येएकस्यद्वयोर्वाजीवनेतत्पिंडदा
नकालेपूर्वोक्तपिंडदानमंत्रेणस्वाहाकारांतेनजीवदुद्देशेनाग्नौसव्यपाणिनापिंडहोमः॥ त्रयाणामपिजीवनेपितृमातृजीवनेवात्रयोपिपिंडाहो
तव्याः॥ अथवापिंडदानरहितोहोमांतएवपिंडपितृयज्ञः॥ अनारंभोवापिंडपितृयज्ञस्य॥ अन्येतुजीवंतमतिक्रम्यनदद्यादितिश्रुतेः॥ पितरिजीवदादि
त्रिकेवाजीवतित्रिभ्योपिहोमएवनभूमौपिंडदानम्॥ जीवत्पितामहस्यपित्रेपिंडंदत्वाद्वयोर्होमः॥ जीवत्प्रपितामहस्याद्ययोःपिंडःप्रपिताम

हायहोमः ॥ होमेच यज्ञोपवीतिना सर्वत्र ॥ इत्थाद्याकरतो ज्ञेयं ॥ अत्रचरुश्रपणहोमयोरधिकरणविकल्पमाहापस्तंबः ॥ सोयमेवंविहितएवानाहि
ताग्नेरौपासनेश्रपणंहोमश्चातिप्रणीतेवाजुहुयादिति ॥ एतद्व्याख्यारुद्रदत्तीया ॥ अनाहिताग्नेर्दक्षिणाग्निस्थानीय औपासनेश्रपणहोमोभ
वतः ॥ अथवा ॥ औपासनएवश्रपयित्वाततोग्निंदक्षिणाग्निंच प्रणीयतस्मिन्जुहुयादित्यर्थइति ॥ एवंचौपासनेएवहोमः ॥ अतिप्रणीतस्त्वह-
त्यर्थइतिकेचित् ॥ अन्येतुनित्येश्रपयित्वातिप्रणीयजुहुयादित्याश्वलायनीयाद्वाक्यसमभिव्याहारात्सान्निधानादतिप्रणीतदृष्टार्थत्वाच्चाति
प्रणीतएवहोमइति ॥ हरदत्तभाष्यमप्येवं ॥ अत्रबहुलेखव्यमपिपद्धतित्वान्नालिखितं ॥ सयुक्तिकत्वात्तु अतिप्रणीतेहोमइत्युक्तं ॥ यद्वा।
यथासंप्रदायंविचार्यवाकार्यं ॥ सकृदाच्छिन्नकुशाख्यपिंडबर्हिरभावेकाशादिग्राह्यम् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ पिंडनिर्वपणंकार्यंकुशा
भावेविचक्षणैः ॥ काशेषुराजदूर्वासुपवित्रेपरमेस्मृतेइति ॥ राजदूर्वाअतिदीर्घदूर्वाः ॥ योनाहिताग्निरौपासनाग्निमान्मृतपितृकः स
वक्ष्यमाणंपार्वणश्राद्धंपिंडपितृयज्ञंचव्यतिषंगेणकुर्यात् ॥ व्यतिषंगोनामद्वयोर्विच्छिद्यसहानुष्ठानात्मकस्तंत्रविशेषः ॥ तत्रपार्वणश्राद्धंपिंड
पितृयज्ञंचव्यतिषंगेणकरिष्यइतिसंकल्प्येध्माधानांतंतत्प्राक्तनंपितृयज्ञंकृत्वाब्राह्मणपच्छौचादिआच्छादनांतंश्राद्धंपुनरिध्माधाना-
दिपितृयज्ञआमेक्षणानुप्रहरणमथपार्वणमत्रानुज्ञानादथोभयशेषंक्रमेणसमापयेदितिक्रमः ॥ आहिताग्निस्तुसर्वाधान्यर्धाधानीवादक्षि
णाग्नावेवपिंडपितृयज्ञंकृत्वापार्वणश्राद्धंपृथगेवकुर्यात् ॥ तत्प्रकारंतुश्राद्धप्रयोगेवक्ष्यामः ॥ ॥ इतिभट्टरामेश्वरसूनुनारायणभ

हृविरचिते प्रयोगरत्ने पिंडपितृयज्ञप्रयोगः ॥ ॥ अथाल्पवक्तव्यत्वात्सार्वणश्राद्धानुपूर्वमष्टकाप्रयोग उच्यते ॥ ॥ हेमंत
शिशिराख्येषु मार्गशीर्षादिचतुर्षु मासेषु कृष्णपक्षे सप्तम्यादित्र्यहसाध्यमष्टकाश्राद्धं कुर्यात् ॥ अशक्तो माघमास एव कुर्यात् ॥
तत्राद्यक्रमः ॥ षष्ठ्यां सायंहोमानंतरं सप्तम्यामेव वा प्रातर्होमानंतरं देशकालौ संकीर्त्य दर्शवत् पित्रादीन् मातामहादींश्च सपत्नीका-
ननुद्दिश्य नित्यविधिरूपमष्टकाश्राद्धं कर्तुकामः पूर्वेद्युः श्राद्धं करिष्य इति संकल्प्य ब्राह्मणनिमंत्रणादि द्वितीयसंकल्पांतं कृत्वाग्निमान्
सन्निधाय्याग्निसमिंधनादि परिषेचनांतं कृत्वा स्थालीत्रयं शूर्पादीनि च पिंडपितृयज्ञवत् पात्राण्यासाद्य स्थालीषु व्रीहिपूरणादि तंडुल
प्रक्षालनांतं कृत्वा तंडुलान् तिसृषु स्थालीषु विभज्य शुद्धौदनं तिलमिश्रौदनं पायसं च श्रपयित्वा निर्मथनवर्जनादि स्रुवायामाज्यनिषेचनां
तं कृत्वा चरुत्रयं क्रमेणाभिघार्योदगुद्वास्याग्निप्रणीताग्नेः पश्चिमतो दक्षिणसंस्थं क्रमेणासाद्य तद्दक्षिणतोऽभ्यंजनांजनकशिपूपबर्ह-
णानि धानादि भस्ममर्यादाकरणोत्तरकर्तव्यपाणिशोधनांतं कृत्वा चरुत्रयं पात्रांतरेषु पृथगुद्धृत्य घृतांक्तं कृत्वा प्राचीनावीत्यग्नौ करिष्य इ-
ति पित्र्यब्राह्मणाननुज्ञाप्य कुरुष्वेति तैरुक्ते प्रणीताग्नाविध्ममुपसमाधायाग्नौ वाज्येन मेक्षणं सुपस्तीर्य शुद्धौदनमध्यादंगुष्ठपर्वमात्रं मेक्षणेनावदाय
पूर्वार्धाच्च तथैवावदाय स्थालीत्रये शिष्टं पृथक् पृथगभिघार्यावत्तं चैकवारमभिघार्य ॥ उदीरतामित्यस्यर्चस्य शंख ऋषिः पितरो देवता त्रिष्टुप्
पूर्वेद्युर्होमे विनियोगः ॥ ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ॥ असुं य ईयुरवृका ऋतज्ञास्ते नोऽवंतु पितरो हवेषु

२ कृसरान्नात्पायसाच्च तथैवावदाय २

स्वधानमइतिमेक्षणेनहुत्वापुनश्चरुत्रयात्पूर्ववद्वदाय ॐ इदंपितृभ्योनमो अस्त्वद्ययेपूर्वासोयउपरासईयुः येपार्थिवेरजस्यानिष
त्तायेवानूनंसुवृजनासुविक्षु २ ॐ आहंपितॄन्त्सुविदत्रां अविल्सिनपातंचविक्रमणंच विष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभज
तपित्वस्तइहागमिष्ठाः ३ ॐ बर्हिषदःपितर ऊत्य १ र्वागिमावोहव्याचकृमाजुषध्वं तआगतावसाशंतमेनाथानःशंयोररपोदधा
त ॥४॥ ॐ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेवंत्वस्मान् ॥५॥ ॐ आच्याजानु
दक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिंसिष्टपितरः केनचिन्नोयद्वआगःपुरुषताकराम ॥६॥ ॐ आसीनासोअरुणीना
मुपस्थेरयिंधत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥७॥ ॐ येनःपूर्वेपितरःसोम्यासोनूहिरेसो-
मपीथंवसिष्ठाः ॥ तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥८॥ एतैर्मंत्रैरपिस्वधानमोंतैरष्टाहुतीःपूर्ववद्धुत्वापितृभ्यइ
दंनममेत्युद्देशत्यागौभत्त्याहुतिंकुर्यात् ॥ एवमष्टावाहुतीर्हुत्वायज्ञोपवीतीमेक्षणमनुप्रहृत्योपस्पृश्यप्राचीनावीतीहुत शिष्टंचरुत्र-
यपरिवेषणादिसंपन्नवचनांतंकृत्वाचरुत्रयशेषंपिंडार्थंसुहुतेषन्नेषुनिक्षिप्यशेषंनिवेदनादिविप्रविसर्जनांतं पार्वणश्राद्धवत्कृत्वा-
नदहरेवपितृमातामहवर्गद्वयस्यसपत्नीकस्यश्राद्धांगतिलतर्पणंकृत्वापार्वणवन्नियमेनदिनशेषंनयेत् ॥ आहिताग्निस्तुनिमंत्रणाद्या
च्छादनदानांतंकृत्वादक्षिणाग्नौ[illegible]धनादिहविरासादनांतंकृत्वापूर्ववद्ब्राह्मणाननुज्ञाप्यदक्षिणाग्नाविध्ममुपसमाधायोदीरतामित्यादि

भिरष्टाहुतीर्हुत्वा मेक्षणानुप्रहरणहोमशेषपरिवेषणादिब्राह्मणविसर्जनांतमनाहिताग्निवत् कुर्यात् ॥ यन्मते पिंडपितृयज्ञेऽग्नौ
पासनाग्नौ होमस्तेषामत्रापि तत्रैव होमः ॥ इति श्रीनारायणभट्टविरचिते प्रयोगरत्ने सप्तमीश्राद्धप्रयोगः ॥ अथाष्ट-
मीश्राद्धप्रयोगः ॥ सप्तम्यां सायमौपासनहोमानंतरं अष्टम्यां वा प्रातर्होमानंतरं देशकालौ संकीर्त्य प्राचीनावीती दर्शव
त् ॥ षष्ठ्यंतान् षट् सपत्नीकान् पितॄन् ननूद्य नित्यविधिरूपमष्टकाश्राद्धं करिष्य इति संकल्प्य ब्राह्मणनिमंत्रणादि द्वितीयसंक-
ल्पांतं कृत्वौपासनाग्निं प्रज्वाल्य प्राणानायम्य तिथ्यादि संकीर्त्याष्टकाश्राद्धांगहोमं करिष्ये इति संकल्प्य तत्र देवतापरिग्रहार्थ-
मन्वाधानं करिष्य इत्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा विश्वेदेवान् सप्तवारं चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यंतमु-
क्त्वा समिद्द्वयं त्रयं वा ग्रावाधायपरिसमूहनादि पूर्णपात्रप्रणयनांतं कृत्वा सपवित्रं शूर्पमग्नेः पश्चिमतो निधाय तस्मिंश्चतुरश्चतुरो मुष्टीनाहु
तिसंख्यया विश्वान् देवान् ध्यात्वा तूष्णीं निरूप्य तथैव प्रोक्ष्याव हननाद्याज्यभागांतं कृत्वाग्नौ होमं करिष्य इति पित्रर्थं ब्राह्मणाननुज्ञाप्य कु
रुष्वेति तैरुक्त श्वरोरवद्धारं मंत्रैर्होमं कुर्यात् ॥ तत्र मंत्राः ॥ अग्ने नयेति मंत्रद्वयस्यागस्त्यो विश्वेदेवास्त्रिष्टुप् ॥ अष्टकाहोमे विनियोगः
ॐ अग्ने नय सुपथा राये अस्मा० किं विधेम स्वाहा ॥ १ ॥ ॐ अग्ने त्वं पारया नव्यो अस्मा० शंयोः स्वाहा ॥ २ ॥ ॐ ग्रीष्मो हेमंत ऋतवः
शिवा नो वर्षाः शिवा अभया शरन्नः ॥ संवत्सरोऽधिपतिः प्राणदो नो अहोरात्रे कृणुतां दीर्घमायुः स्वाहा ॥ ३ ॥ शांता पृथिवी शिवमंतरिक्षं द्यौ

नैर्ऋत्यभयंनोअस्तु ॥ शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतःस्वाहा ॥४॥ आपोमरीचीःप्रवहंतुनोधियोधातासमुद्रो
वहंतु पापं ॥ भूतंभविष्यद्भयंविश्वमस्तुमेब्रह्माधिगुप्तःस्वाराक्षराणिस्वाहा ॥५॥ ॐ विश्वआदित्यावसवश्चदेवारुद्रागोप्ता
रोमरुतःसदंतु ॥ ऊर्जंप्रजाममृतंपिन्वमानःप्रजापतिर्मयिपरमेष्ठीदधातुस्वाहा ॥६॥ एतैर्मंत्रैरेकश्रुत्यापठितैश्चतस्रआ-
हुतीर्हुत्वा ॥ प्रजापतेर्हिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ अष्टकाहोमेवि॰ ॥ ॐ प्रजापते॰रयीणांस्वाहा ॥७॥ एवंसप्ताहुतीर्हु-
त्वासर्वत्रविश्वेभ्योदेवेभ्यइदंनममेत्युद्देशत्यागौकृत्वास्विष्टकृदादिहोमशेषंसमाप्यस्वागतोक्त्याद्यर्घ्यशेषसमवनयनांतंकृ-
त्वाब्राह्मणसन्निधावाग्नेय्यांदिशिभुवंप्रोक्ष्यदर्शश्राद्धवत्प्रथमपात्रन्युब्जीकृत्यगंधदानादिपाणिशोधनांतंकृत्वाभोजनार्थमिद-
न्नमुद्धृत्यघृताक्तंकृत्वापित्रर्थंब्राह्मणसमीपमुपविश्यतत्पाणिंपर्युक्ष्यतत्रप्राचीनावीतीदक्षिणाग्रान्दर्भानास्तीर्यमेक्षणमुपस्ती-
र्यमेक्षणेनद्विवारमवद्यपात्रस्थमवत्तंचाभिघार्यसोमायपितृमतेस्वधानमइतिपाणौहुत्वापुनःपूर्ववदादायअग्नयेकव्यवाहनाय
स्वधानमइतितथैवजुहुयात् ॥ एवंसर्वत्रजुहुयात् ॥ ततोद्विजाहुतमन्नंभोजनभाजनेषुनिक्षिप्याचम्यपूर्ववदुपविशेयुः ॥ ततःकर्तान्नं
परिविष्यशुन्धताभिरद्भिःप्रोक्ष्यपित्रादिभ्योदर्शवक्ष्यत्कांपिंडदानकालेपूर्वपश्चिमतोद्वेलेखेद्विजसमीपेकृत्वाक्रमेणसकृदाच्छि-
न्नदर्भेणास्तीर्यप्राचीनावीतीशुंधंतांपितरःसपत्नीकाइत्यादिअभ्युपस्थानवर्जंद्विजविसर्जनांतंसर्वंदर्शश्राद्धवत्कृत्वातद्दहरे

ववर्गद्वयस्य तिलतर्पणं कुर्यात् ॥ अत्र कामकालौ विश्वेदेवौ ॥ इष्टिश्राद्धे क्रतुदक्षौ वष्टम्यां कामकालाविति शंखस्मृतेः ॥ अत्र गृह्ये ॥
श्वोभूतेष्टका पशुनास्थालीपाकेन वेति विकल्पाभिधानेपि लोकविद्विष्टत्वात् पत्नीसंयाजानां जाघन्येव पशुनानुष्ठानाभावात् पशुपक्षेप्र
योगो नोक्तः ॥ ॥ इत्यष्टमीश्राद्धप्रयोगः ॥ ॥ अथान्वष्टक्याख्यनवमीश्राद्धप्रयोगः ॥ ॥ कर्ता पूर्वेद्युः परेद्युर्वा पूर्वोक्त-
काले देशकालौ संकीर्त्य प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य पितृवर्गं सपत्नीकं मातृवर्गं मातामहवर्गं च सपत्नीकं षष्ठ्यंतं निर्दि-
श्य नित्यविधिरूपमन्वष्टकाश्राद्धं पिंडपितृयज्ञव्यतिरिक्तपार्वणविधानेनान्नेन हविषाऽहं होष्ये वा करिष्य इति संकल्प्य निमंत्रणादि द्वि-
तीयसंकल्पांतं दर्शश्राद्धवत् कृत्वा ब्राह्मणान् सन्निधाय दक्षिणाप्रवणे देशे औपासनाग्निं विधिवत् प्रतिष्ठाप्य परिसमूह्य प्राग्दक्षिणाग्रैः
समूलैर्दर्भैरेकं पर्यं त्रिवारमप्रदक्षिणं परिस्तीर्य पात्रासादनार्थं दर्भानास्तीर्य चरुस्थालीत्रयशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृ-
ष्णाजिनसकृदाच्छिन्नत्रयेध्ममेक्षणकमंडलूनेकैकश आग्नेयसंस्थानासाद्य स्थाल्यां च व्रीहिपूरणादितंडुलप्रक्षालनांतं कृत्वा स्थालीषु तंडुलान्निप्र
ज्य शकृद्धौदनं तिलमिश्रौदनं पायसं च श्रपयित्वा किंचिदोदनाग्रं ध्रुवं मंडाख्यपात्रांतरेणादाय संभृत्याग्निं प्रतिप्रणीय तत् पूर्ववत् परिस्तीर्य स्फ्येन पि-
त्र्यादिवर्गत्रयार्थं पश्चिमापवर्गं लेखात्रयमुल्लिख्य प्रत्येकमद्भिरभ्युक्ष्य सकृदाच्छिन्नेनैकैकेनैकैकां लेखांस्तृत्वा ध्रुवायामाज्यं क्षिप्त्वौपासना-
ग्नेर्दक्षिणतः कुशेष्वासाद्य स्रुवेणाज्यमादाय चरुत्रयं प्रत्येकमभिघार्याग्नेरुदगुद्वास्याग्निप्रणीतानामग्नेः पश्चिमतो दर्भेषु क्रमेण दक्षिणसंस्थमासा-

घृतदधिमिश्रयवपिष्टरूपसक्तून्दधिमंथाख्यान्मधुमिश्रयवपिष्टरूपसक्तून्मधुमंथाख्यान्पात्रद्वयेसंभृत्यदधिमंथसक्तूनौपासनेधिश्रित्याभिघा
र्योदगुद्वास्यपायसाद्दक्षिणतआसाद्याभ्यंजनांजनकशिपूपबर्हणानांप्रत्येकंत्रयमौपासनाग्नेर्दक्षिणतआसाद्यपित्रर्थब्राह्मणानांस्वागतवचनादितृ
तीयनिमंत्रणांतंकृत्वार्घ्यासादनकालेतैजसादीनिनवसंख्याकानिपात्राण्यासादयेत्॥मातृद्वित्वेबहुत्वेवापितामहीप्रपितामहीद्वित्वेबहुत्वेवातत्त
त्संख्याकानितद्वर्गपात्राण्यासादयेत्॥देवतासंख्याकानिपात्राण्यासाद्यप्रोक्ष्योत्तानानिकृत्वाप्रतिपात्रंदर्भत्रयंनिधायजलंसंपूर्यशंनोदेवीति
मंत्रेणैकैकवर्गपात्रस्थंजलंसकृदृत्तुमंत्र्यतिलोसीतिमंत्रेणमातृमातामहादिरूपान्नूहितयथापठितपितृशब्दवताप्रतिपात्रंमंत्रावृत्त्यातिलान्नि
क्षिप्यगंधपुष्पाणिचनिक्षिप्यपितृपात्रंसंपन्नमित्यादियथालिंगमभिमृश्यदर्शवत्पित्रादिनामगोत्रपूर्वकंसुस्कावाह्यार्चयित्वोपवीतीस्व-
वेषांनामगोत्राण्युच्चार्यसंपादितावःस्वधा[illegible]र्घ्याइतितत्तत्पात्रंतत्तत्पुरतःक्रमेणसंस्थाप्यदर्शवत्पितृणामर्घ्यंदत्वामातरिदंतेऽर्घ्यंस्वधानमोन
ममेत्यादिनामातृवर्गस्यदत्वामातामहवर्गस्यचदर्शवद्दत्वासर्वत्रोत्तरपात्रस्थंजलंपित्रादिपात्रेक्षिप्त्वातज्जलेनमुखमङ्क्त्वान्यग्बिलपात्रकरणा
दिपाणिशोधनांतंकृत्वाचरुत्रयाद्दधिमंथाच्चपात्रचतुष्टये क्रमेणहविःपृथगुद्धृत्यघृताक्तंकृत्वाग्नौकरिष्यइतिपित्रर्थब्राह्मणाननुज्ञाप्यक्रि
यतामितितैरुक्तेतिप्रणीताग्नाविध्ममुपसमाधायमेक्षणमुपस्तीर्यतेनांगुष्ठपर्वमात्रंक्रमेणहविश्चतुष्टयस्यमध्यात्पूर्वार्धाच्चपृथक्पृथगवदाय
पात्रस्थंहविश्चतुष्टयंपृथक्पृथगभिघार्यअवत्तंसकृदभिघार्यसोमायपितृमतेस्वधानमइत्यग्नौदक्षिणदेशेहुत्वाद्वेशत्यागौकृत्वापुनः

ति० ३
श्रौ

पूर्ववद्दक्षिणभागेहविश्चतुष्टयादवदायाग्नयेकव्यवाहनायस्वधानमइतिवन्हेरुत्तरभागेहुत्वोद्देशत्यागौकृत्वायज्ञोपवीतीतूष्णींमेक्षणमनुप्रहृ-
त्योपस्पृश्योभाभ्यांपाणिभ्यांपरिविष्यहुतशेषंपात्रचतुष्टयस्थंहविःसर्वकिंचिच्छेषंवर्गत्रयद्विजभोजनभाजनेषुपरिविष्यान्नत्यागादिसंपन्नवचनांतंकृ
त्वापिंडार्थंसुहुतंश्राद्धीयसर्वान्नेषुस्थालीचतुष्टयस्थितंहविश्चतुष्टयंसर्वंमधुमंथांश्चप्रक्षिप्यपुनःप्रकिरणार्थंसर्वस्मादन्नादुद्धृत्यशेषं
निवेद्यद्विजेरुत्तरापोशनेहस्तप्रक्षालनेचकृतेस्वयमाचम्यपूर्वास्तीर्णेषुबर्हिःषुशुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाःशुंधं
तांमातरःशुंधंतांपितामह्यःशुंधंतांप्रपितामह्यःशुंधंतांसपत्नीकमातामहाःशुंधंतांसपत्नीकमातृपितामहाःशुंधंतांसपत्नीकमातृप्रपि
तामहाःइतिमंत्रैःस[illegible]कमंडलुजलेनिनयनंकृत्वाशुंधंतांक्लाबराइत्यादिदर्शश्राद्धेवक्ष्यमाणवस्त्रादिदेवध्यानंकृत्वाआर्द्रामलकप्रमाणान्-
मधुसर्पिस्तिलयुतान्नपिंडान्कृत्वा[illegible]वाज्येनाभिघार्यएतत्तइत्यादिनायथालिंगंवर्गत्रयस्यपिंडरूपमन्नमित्युक्तिपूर्वकंपिंडनिर्वपणंकृ
त्वास्त्रीपिंडेषुपूर्वसंभृतमोदनाग्रद्रव्यंनिषिच्यकरावघर्षणाद्युपस्थानांतंकृत्वावीरंमेदत्तपितरइति[illegible]त्याषिनृशब्दान्हेनवर्गत्रयपि
तृन्प्रत्येकंमाध्यंमध्यमपिंडत्रयंपत्नीप्राशयित्वापिंडोद्वासनादिविप्र विसर्जनांतंदर्शश्राद्धवत्[illegible]द्दइहरेववर्गत्रयस्यतिलतर्पणं
कुर्यात्॥मातृवृद्धौपिंडदानकालेएनद्वामस्मन्मातरोयज्ञदेश्रीदे असुकगोत्रेवस्करूपेयेचयुवामत्रानि[illegible]डदानंकृत्वास्मन्मातृभ्यांयज्ञ
दश्रीदाभ्यांअयपिंडःस्वधानमोनममतेभ्यश्चगयायांविष्णुपदेरुद्रपदेवादत्तमस्त्वितियथावासनमु[illegible]येत्॥अभ्यंजनदानेयज्ञदे

श्रीदे इत्यृचार्या अभ्यंजायामिति तैलं क्षिपेत् ॥ अंजनदानेंजायामिति मत्येकं द्विवारमंजनं क्षिपेत् ॥ वासोदाने ॥ एतद्वः पितरो वासोइत्यादिना
पितृशब्दानूहेन मंत्रावृत्त्या सर्वासां वासोदद्यात् ॥ एवं पितामही प्रपितामहीद्विलेपि ॥ मातृबहुत्वे पिंडदाने एतद्वोयज्ञदाश्रीदारुद्रदा अमुक
गोत्रा वसुरूपायेचयुष्मानत्रान्विति पिंडं दत्वाऽस्मन्मातृभ्यो यज्ञदाश्रीदारुद्रदाभ्योयं पिंडः स्वधानमोनमम ॥ गयायामिति पूर्ववत् अभ्यंज
नदाने पूर्ववन्नामान्युक्त्वा अभ्यङ्ध्वमिति तैलं क्षिपेत् ॥ अंजनदाने अङ्ध्वमित्यंजनमंत्रावृत्त्या प्रत्येकं द्विवारं क्षिपेत् ॥ वासोदाने एतद्वः
पितरो वासइत्यादिनानूहेन सर्वासां वासोदद्यात् ॥ पितामही प्रपितामही बहुत्वेप्येवं कुर्यात् ॥ सर्वपिंडदानादिषु मात्रादीनां द्वित्वे कनाम
त्वेच द्विवचनांतेन तत्तन्नामनिर्दिश्य बहुत्वे एकनामत्वेच बहुवचनांतं ॥ अत्रयद्यपि सप्तम्यादितिथित्रये श्राद्धं कर्तव्यतोक्ता ॥ तथापि गृह्य
सूत्रे ॥ अष्टमी ह्यष्टकाइत्युपक्रम्य पूर्वेद्युः पितृभ्योदद्यात् ॥ अपरेद्युरन्वष्टक्यामिति सप्तमीनवमीश्राद्धयोरष्टमीसुपजीव्योक्तत्वात्त-
स्या एव सांवत्सरिकवत्परापह्णाधिक्यादिसंविचार्य तदनुरोधेन सप्तमीनवमीश्राद्धं पूर्वेद्युरपरेद्युश्च कार्यं ॥ ननु तयोर परापह्णाधिक्यादिकं स्वा
तंत्र्येणाविचार्यमिति ॥ यदि मार्गशीर्षादिचतुर्षु मासेषु मलमासः स्यात्तदा अनन्तमासएवाष्टकाः कार्याः ॥ ॥ ननु मलमासे ॥ हे
मंतशिशिरयोश्चतुर्णामपरपक्षाणामिति चतुर्ग्रहणात् ॥ इत्याद्याकारतोज्ञेयं ॥ अष्टकाश्राद्धाकरणे मत्स्यवायउक्तः ॥ कूर्मपुराणे ॥ य-
स्यतेप्रतिगच्छेयुरष्टकाभिरपूजिताः ॥ मोघास्तस्य भवंत्याशाः परत्रेहचसर्वशइति ॥ एतदकरणे प्रायश्चित्तं ऋग्विधाने ॥ एभिर्द्युभि-

जपेन्मंत्रंशतवारंतुतद्दिने ॥ अन्वष्टक्यंयदाश्राद्धंसंपूर्णंयातिसर्वदेति ॥ ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेन्वष्टक्यप्रयोगः॥ ॥
तच्चभाद्रपदापरपक्षेमहालयाख्येसप्तम्यादिषुत्रिष्वहःसु अष्टकावत्सर्वंकुर्यादितिवृत्तिकृत् ॥ हरदत्तस्तुतत्रैवापरपक्षेमघायुक्तायांत्र
योदश्यांसंकल्पविधानेनमाघ्यावर्षाख्यंश्राद्धमित्याह ॥ ॥ इतिमाघ्यावर्षप्रयोगः ॥ ॥ अथप्रतिमासमपरपक्षश्राद्धं ॥ ॥
प्रतिकृष्णपक्षप्रतिपदाद्ययुग्मातिथिषुपृथक्मातृश्राद्धवर्जंसपत्नीकपितृमाता[illegible]र्द्धयस्यान्वष्टक्यवत्करणाच्चामवर्जंसर्वंकार्यं ॥
इत्यपरपक्षश्राद्धप्रयोगः ॥ ॥ कृत्तिकादिषुकाम्यश्राद्धंवृत्तिकारमतेनाष्टमीश्राद्धवत्सर्वंकार्यं ॥ यद्वाशौनकोक्तरीत्याहृद्दिश्रा
द्धवत् ॥ ॥ इतिश्रीरामेश्वरभट्टसूरिसूनुनारायणभट्टविरचितेप्रयोगरत्नेअष्टकाविकृतिश्राद्धप्रयोगः ॥ ॥ अयंप्रयोगर-
त्नग्रंथःसमाप्तः ॥ ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ॥ शाके १७९२ प्रमोदनामसंवत् ॥ पौषशुक्ल १३ समाप्त ॥
हें पुस्तक, मुंबईंत. काशिनाथ वासुदेव रवाडेकर यांपीं नीतिप्रकाश छा० छापिलें . ता० ४ जानुआरी सन १८७१ ॥ ६ ॥

